गेहोदवसितं वेश्मसद्मनिकेतनम् इत्यमरः । विश्वं सर्वं जगत् प्रतिहततिमिरं प्रतिहतं तिमिरं येन तथाभूतं निवारितान्धकारं कर्तुं विधातुम् ईशः समर्थः, शातक्रतव्यां शतक्रतोः इन्द्रस्य इयं शातक्रतवी तस्यां दिशि ऐन्द्र्यां पूर्वस्यां दिशि नवाख्यां यातः प्रत्यहं नूतनत्वं प्राप्तः, दिक्कालापेक्षया दिशां प्राच्यादीनां कालानां पूर्वाह्णादिसमयानाम् अपेक्षया अनुसारं त्रिभुवनम् त्रयाणां भुवनानां समाहारः त्रिभुवनम् त्रिलोकीं पात्राद्यन्तस्य न इति निषेधात् द्विगोः इति न ङीप्, अटतः पर्यटतः, तिग्मभानोः तिग्मः तीक्ष्णः भानुः किरणो यस्य तस्य उष्णांशोः सूर्यस्य सः असौ अर्चिषां तेजसाम् उद्गमः उदयः वः युष्माकं शिवं मङ्गलं दिशतु विदधातु । उपमालङ्कारः ।

**भावार्थः**—विनाशविपर्ययरहितः सूर्यस्य किरणराशिः दीपः गृहस्य अन्धकारमिव रात्रेः अन्धकारं सम्पूर्णं निष्कासयति । त्रिभुवनं भ्रमतः तस्य सूर्यस्य किरणसमूहः प्रभाते पूर्वस्यां दिशि प्रत्यहं नूतनः व्यपदिश्यते । असौ' पूर्वादिसर्वादिशः प्रकाशयति, पूर्वाह्णादिकं कालं च सृजति । एवं भूतः किरणराशिः युष्माकं मङ्गलं विदधातु ।

**टिप्पणी**—दीपः अस्तव्यः निर्वाप्यः तत्त्वशून्यः, अनिजरुचिः, अनिशा दिवसः तत्र नश्वरः अदीप्तद्युतिः भवति इत्यर्थः सूच्यते ।

As a lamp burning steadily in a place removes darkness with its flame, so the rays of the Sun remove darkness of night with brilliant rays. Free from mortality and worries those rays traverse the three worlds regularly and appear new in the eastern quarters every day. May those rays bring happiness to you.18

विनाशव्यसनसे रहित, अपने तेजसे रात्रिको नाश करने वाले, एक जगह रहने पर भी दीपक घरके तुल्य विश्वके अन्धकारको दूर करने वाले, पूर्व दिशामें नूतन रूपसे प्रतिभात, दिशाएँ और काल सृष्टिकेलिए त्रिभुवनमें घूमने वाले, सूर्यके तेज आपके मङ्गल करें ॥१८॥

**मागान्म्लानिं मृणाली मृदुरिति दययेवाप्रविष्टोऽहिलोकं**
**लोकालोकस्य पार्श्वं प्रतपति न परं य स्तदाख्यार्थमेव ।**
**ऊर्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्यो द्युसीम्नि**
**स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ।।१९।।**

**अन्वयः**—मृदुः मृणाली म्लानिं मागात् इति दयया इव यः अहिलोकम् अप्रविष्टः, यः तदाख्यार्थम् एव लोकालोकस्य परं पार्श्वं न प्रतपति, ऊर्ध्वं द्युसीम्नि ब्रह्माण्डखण्ड स्फुटनभयपरित्यक्तदैर्घ्यः स्वेच्छावश्यावकाशावधिः सः तापनः रोचिरोघः वः अवतु ।

**व्याख्या**—मृदुः कोमला मृणाली अल्पं मृणालं मृणाली षिद्गौरादिभ्यश्च इति ङीष्, म्लानिं म्लानत्वं मागात् न यातु इति दयया इव यः अहिलोकं नागलोकं न प्रविष्टः, यश्च तदाख्यार्थं तस्य लोकालोकपर्वतस्य आख्यार्थम् अव्यर्थनामत्वं विधातुं तस्य परं पार्श्वं न प्रतपति, ऊर्ध्वं द्युसीम्नि ब्रह्माण्डखण्डस्य स्फुटनं दलनं तस्मात् भयेन परित्यक्तदैर्ध्यः सङ्कोचितदैर्ध्यः, स्वेच्छावश्यः निजाधीनः यः अवकाशः स एव अवधिः मर्यादा यस्य तथाभूतः स्वेच्छाकृतप्रकाशसीमः सः तापनः तपनस्य सूर्यस्य अयं तापनः रोचिरोघः रोचिषां तेजसाम् ओघः समूहः वः युष्मान् अवतु रक्षतु ।

प्रकाशश्चाप्रकाशश्च लोकालोक इव स्थितः (रघुवंशम् १-२८) लोकालोकः जगत् आवृत्य स्थित इति कल्प्यते । अस्य अपरपार्श्वः तमोमयः ।

**भावार्थः**—कोमला मृणाली म्लानिं न लभताम् इति दयया इव सूर्यस्य किरण-राशिः नागलोकं न प्रविशति, लोकालोकनाम्ना कल्पितपर्वतस्य अपरं पार्श्वं न तपति, आकाशसीम्नि ब्रह्माण्डखण्डस्य स्फुटनाशङ्कया स्वस्य दैर्घ्यं परिहरति, स्वेच्छया च अवकाशसीमां निर्धारयति । एवं भूतः सूर्यस्य किरणसमूहः युष्मान् रक्षतु ।

Apprehending that the tender lotus creepers may lose their freshness, the rays do not enter the nether region. They do not afflict the sides of the mountain Lokāloka. Fearing the splitting up of the entire region above, the Sun contracts its long rays and gives light according to its sweet will. May those rays of the Sun protect you.19

कोमल कमलको दुःख न हों, ऐसी भावनामें जो दयासे नागलोकमें प्रवेश नहीं करते हैं लोकालोक पर्वतके नामको सार्थक बनानेकेलिए उसके दूसरे पार्श्वको नहीं तपती हैं, आकाशके ऊपर सीमामें स्थित ब्रह्माण्डखण्डके टूट जानेके भयसे अपनेको दीर्घप्रसारी न करनेवाली और अपनी अवकाशकी मर्यादा अपने आप रखनेवाली वे सौर किरणे आप लोगोंकी रक्षा करें ॥१९॥

**अश्यामः काल एको न भवति भुवनान्तोऽपि वीतेऽन्धकारे**
**सद्यः प्रालेयपादो न विलयमचलश्चन्द्रमा अप्युपैति ।**
**बन्धः सिद्धाञ्जलीनां नहि कुमुदवनस्यापि यत्रोज्जिहाने**
**तत् प्रातः प्रेक्षणीयं दिशतु दिनपते र्धाम कामाधिकं वः ।।२०।।**

**अन्वयः**—अन्धकारे वीते एकः कालः अश्यामः न, भुवनान्तोऽपि, प्रालेयपादः अचलः न, चन्द्रमाः अपि सद्यः विलयम् उपैति, यत्र उज्जिहाने, नहि सिद्धाञ्जलीनां, कुमुदवनस्य अपि बन्धः (भवति), प्रातः प्रेक्षणीयं दिनपतेः तत् धाम वः कामाधिकं दिशतु ।

**व्याख्या**–अन्धकारे वीते अपसरति, नहि एकः कालः दिवसरूपः अश्यामः अविद्यमाना श्यामा रात्रिः यस्मिन् सः तामसीरहितः शुभ्र इत्यर्थः, भुवनान्तोऽपि, भुवनानां जगताम् अन्तः शेषसीमा अपि शुभ्रो भवति, न केवलं प्रालेयं तुषारः पादे यस्य सः हिमालयः विलयं द्रवणम् उपैति, चन्द्रमाः अपि विलयं म्लानिम् अदृश्यताम् च उपैति । यत्र यस्मिन् सूर्ये उज्जिहाने उदिते न केवलं सिद्धाञ्जलीनां बन्धः नमस्कारात्मकः सिद्धानाम् अञ्जलिबन्धः, अपितु कुमुदवनस्य बन्धः मुद्रितावस्था भवति । रात्रौ कुमुदं विकसति, दिवा तु मुद्रितं भवति । प्रातः प्रभाते प्रेक्षणीयं दर्शनीयं दिनपतेः सूर्यस्य तत् धाम तेजः युष्मभ्यं कामाधिकं कामनायाः अधिकं दिशतु ददातु । पक्षान्तरे मा लक्ष्मीः का ? तस्याः अधिकं प्रयच्छतु मा । लक्ष्मीः केवलं धनदात्री, असौ तु रुजादिकमुपशाम्य ततः अधिकं त्रितापनाशकं सर्वविधं सौभाग्यं प्रयच्छति ।

**भावार्थः**–प्रातः अन्धकारे अपसरति न केवलं दिवसरूपी कालः श्यामारहितः, शुभ्रः, समग्रः संसारोऽपि आलोकितः भवति । पुनश्च हिमालयस्य हिमं द्रवति, चन्द्रमाः म्लानिम् अदृश्यतां च उपैति । सूर्ये उदिते सिद्धाः अञ्जलिं बद्ध्वा नमस्कुर्वन्ति, कुमुदवनं मुद्रितं भवति । प्रातः दर्शनीयं दिनपतेः सूर्यस्य तेजः युष्माकं कामनायाः अधिकं फलं प्रयच्छतु ।

With darkness receding in the morning the entire creation gets lightened. The snow covers the mountain slopes and the moon retreats. The Siddhas with folded hands bend in veneration and the lilies are closed with the rising of the Sun. May that graceful orb of the Sun rising in the morning fulfil more than you desire.20

अन्धकार दूर होनेसे एक दिवसरूपी काल नहीं, सारे संसारके सीमा भी धवल (श्यामारहित, रात्रिरहित) हो जाते हैं; सिर्फ हिमाचल नहीं, हिमांशु (चाँद) भी शीघ्र विलयको (द्रवण और विलीनता को) प्राप्त होता है; जिसके प्रकाश होनेसे नकेवल सिद्धोंके (देवता विशेषों का) नमस्कारात्मक अञ्जलि बद्ध होती है; कुमुद वनका भी मुद्रितावस्था होती है । सवेरे दर्शनीय सूर्यके यह तेज आपको कामनासे अधिक प्रदान करें ॥२०॥

**यत् कान्तिं पङ्कजानां न हरति कुरुते प्रत्युतातीव रम्यां**
**नो धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव ।**
**कर्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्या-**
**श्चक्षुः सामान्यचक्षुर्विसदृशमघभिद् भास्वतः स्तान्महो वः ॥२१॥**

**अन्वयः**—यत् पङ्कजानां कान्तिं न हरति, प्रत्युत अतीव रम्यां कुरुते, यत् तारकाभां नो धत्ते, नित्यमेव आशु नितरां तिरयति, यत् निमेषं कर्तुं न, परं दिवसमपि कर्तुम् अलम्, सामान्यचक्षुर्विसदृशं यत् त्रिलोक्याः एकं चक्षुः, तत् भास्वतः महः वः अघभित् स्तात् ।

**व्याख्या**—यत् महः तेजः, महउत्सवतेजसोः इति मेदिनी, पङ्कजानां कान्तिं न हरति, प्रत्युत अतीव रम्यां रमणीयतरां कुरुते, यत् तारकाणां नक्षत्राणां कनीनिकानां च आभां कान्तिं नो धत्ते न पुष्णाति, प्रत्युत नित्यमेव आशु शीघ्रं नितरां तिरयति वाधते, यत् निमेषं क्षणमात्रं कर्तुं न अलं, परं दिवसं कर्तुं समर्थं भवति इति विरोधः, निमेषं चक्षुःपातमिति तत्परिहारः, सामान्यचक्षुषः विसदृशं विलक्षणं यत् त्रिलोक्याः त्रयाणां लोकानां समाहारः त्रिलोकी तस्याः अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । द्विगोः इति ङीप्, एकं चक्षुः, तत् भास्वतः सूर्यस्य महः तेजः वः युष्माकम् अघं पापं भिनत्ति इति अघभित् पापध्वंसकारि स्तात् भवतु । विरोधाभासोऽलङ्कारः ।

**भावार्थः**—यत् महः पद्मानां रमणीयतां तनोति, कान्तिं न हरति, नित्यं तारकाणां (नक्षत्राणां कनीनिकानां च) कान्तिं न पुष्णाति परम् अतिशयेन वाधते, निमेषं (क्षणं, चक्षुरुन्मेषम्) कर्तुं न प्रभवति, दिवसमपि कुरुते, साधारणचक्षुषः विलक्षणं यत् त्रिभुवनस्य एकं चक्षुः भवति, सूर्यस्य तत् अनिर्वचनीयं महः युष्माकं पापं विनाशयतु ।

**टिप्पणी**—"प्रत्युताधिक्यरम्यां" पाठं परिवर्त्य 'प्रत्युतातीवरम्यां' कृतम् ।

The lustre of the Sun does not snatch away but enhances the beauty of the lotuses, it does not replenish the beauty of the stars (eye-balls), rather affects it. The Sun is not able to cause a twinkle even for a moment but heralds the beginning of the day. May that effulgence of.the Sun which is an extra-ordinary eye of the the three worlds, burn all your sins.21

पद्मोंकी कान्तिको जो अपहरण नहीं करते, पर बढ़ा देते हैं, जो ताराओंके (नक्षत्रोंके, कनीनिकाओंके) कान्तिको नहीं अपनाते हैं, उसको जोरसे निष्प्रभ कर देते हैं, जो केवल एक निमेष नहीं, पर दिवस भी बनाते हैं, ऐसे त्रिभुवनके एक असाधारण नेत्रस्वरूप सूर्यके तेज आप लोगोंके पाप हरण करें ॥२१॥

**क्ष्मां क्षेपीयः क्षपाम्भःशिशिरतरजलस्पर्शतर्षादृतेव**
**द्रागाशा नेतुमाशाद्विरदकरसरःपुष्कराणीव बोधम् ।**
**प्रातः प्रोल्लंघ्य विष्णोः पदमपि घृणयेवातिवेगाद्दवीय-**
**स्युद्दाम द्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युति र्वः ॥२२॥**

**अन्वयः**—क्षपाम्भः शिशिरतरजलस्पर्शतर्षात् इव क्षेपीयः क्ष्मां ऋता, आशाद्विरद-करसरःपुष्कराणि बोधं नेतुम् इव द्राक् आशाः ऋता, प्रातः अतिवेगात् घृणया इव विष्णोः पदमपि प्रोल्लंघ्य दवीयसि उद्दाम द्योतमाना, द्युतिः वः दुर्निमित्तं दहतु।

**व्याख्या**—क्षपाम्भःशिशिरतरजलस्पर्शतर्षात् क्षपायाः रात्रेः यत् अम्भः तेन शिशि-रतरं यत् जलं तस्य स्पर्शे तर्षः अभिलाषः तस्मात् इव, कामोऽभिलाषस्तर्षश्च इत्यमरः, क्षेपीयः क्षिप्रतरं क्ष्मां पृथिवीं ऋता प्राप्ता, आशाद्विरदानां दिग्गजानां ये कराः शुण्डा-दण्डाः ते एव सरांसि तेषां पुष्कराणि कराग्राणि पद्मानि इव तानि बोधं विकासं नेतुमिव द्राक् झटिति आशाः दिशः ऋता प्राप्ता, प्रातः प्रभाते अतिवेगात् घृणया जुगुप्सया इव जुगुप्सा करुणे घृणे इत्यमरः, विष्णोः पदम् चरणम् आकाशं च प्रोल्लंघ्य अतिक्रम्य दवीयसि अतीव दूरे उद्दामं प्रचण्डं द्योतमाना दीप्यमाना, दिनपतेः सूर्यस्य द्युतिः भाः वः युष्माकं दुर्निमित्तम् अशुभं दहतु भस्मीकरोतु। उत्प्रेक्षालङ्कारः।

**भावार्थः**—रात्रेः शिशिरतरजलस्पर्शाभिलाषेण इव पृथिवीम् आगता, दिग्गज-शुण्डादण्डाग्रपुष्कराणि विकासयितुम् अभिलाषुका इव दिशः प्राप्ता, प्रातः अतिवेगात् जुगुप्सया इव विष्णुपदम् विष्णोः पदम् आकाशं च अतिक्रम्य दूरतरं गता, प्रचण्डं द्योतमाना सूर्यस्य द्युतिः युष्माकम् अशुभं भस्मीकरोतु।

**टिप्पणी**—द्विरदकरे सरस्त्वारोपणं नार्थं पुष्णाति। अनुप्रासदृष्ट्या अर्थदृष्ट्या च सरः इति पदं परिवर्त्य पुरः' इति कथनं सङ्गतं स्यात्। आशङ्के, मूलं तालपत्रलेखं सम्यङ् न पठित्वा उद्धरत स्त्रुटिरियम्।

As if hankering after cool water, getting cooler due to dew drops of the night, the rays of the Sun reach the earth in haste. They cover the ten quarters quickly as if to awaken the lotus-like trunk-tips of the Diggajas (Guardian elephants of the quarters). Those rays traversing viṣṇupada, the sky as if to surpass Viṣṇu, shine brightly afar. May they ward off all your worries.22

रातकी ओसके शीतल स्पर्श पानेकेलिए मानो पृथिवी पर शीघ्र आने वाली, दिग्गजोंके कराग्र (शुण्डके अग्रभाग जो कि तालाबके पद्मसदृश दृश्य होते हैं) पुष्करोंको विकसित करनेकेलिए मानो दिशाओंमें पहुँच जाते हैं, प्रभातमें विषणुपदको (आकाश को) घृणासे उल्लंघन करके बहुत दूरमें दीप्त सूर्य किरणें आप लोगोंके अमङ्गल दूर करें ॥२२॥

**नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि गम्या**
**गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन।**

**प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णात्विषो वो**
**वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ।। २३।।**

**अन्वयः**—अदयरयदलत्क्ष्माधरस्य कल्पापायवायोः अपि नो गम्या, गाढोद्गीर्णोज्ज्वलश्रीः अहनि तमःकज्जलेन नोरहिता न, पतङ्गात् प्राप्तोत्पत्तिः पुनः मोषं न उपगता, निखिलद्वीपदीपस्य उष्णात्विषः अन्यरूपा वर्तिः सा एव दीप्तिः वः सुखयतु ।

**व्याख्या**—अदयरयदलत्क्ष्माधरस्य अदयः तीव्रः यः रयः वेगः तेन दलन्तः विदीर्यन्तः क्ष्माधराः पर्वताः यस्मिन् तस्य कल्पापायवायोः, कल्पस्य स्थितंस्य जगतः अपायः विनाशः प्रलय इत्यर्थः, तस्मिन् यः वायुः तस्य, प्रलयकालीनप्रचण्डवातस्य अपि नो गम्या न निर्वाप्या इत्यर्थः । अहनि दिवसे गाढम् उद्गीर्णा प्रसृता उज्ज्वला श्रीः कान्तिः यस्याः तथाभूता, तमः अन्धकारः एव कज्जलं तेन नो रहिता न, रहिता एव, द्वौ नञौ प्रकृतार्थवोधकौ, पतङ्गात् सूर्यात् प्राप्ता अधिगता उत्पत्तिः यस्याः तथाभूता, पतङ्गः पक्षिसूर्ययोः इत्यमरः, मोषं न उपगता कदाचिदपि न निर्वापिता, निखिलद्वीपदीपस्य अखिलजगतः दीपसदृशस्य, उष्णात्विषः उष्णा त्विट् द्युतिः यस्य तस्य उष्णांशोः, स्युः प्रभारुग्रुचिस्त्विड्भा भास्छविद्युतिदीप्तयः इत्यमरः, सा एव अन्यरूपा अन्यप्रकारा असाधारणी वर्तिः आलोकवर्तिका, वः युष्मान् सुखयतु सुखिनःकरोतु । अनुप्रासरूपकयोः सङ्करः ।

**भावार्थः**—पर्वतमपि चालयता प्रलयकालीन महावातेनापि न निर्वाप्या, अहनि गाढं दीप्यमाना, तमोरहिता, पतङ्गात् उत्पन्ना, परं पतङ्गैः न निर्वापनार्हा, अखिलजगतः दीपस्वरूपस्य सूर्यस्य असाधारणी वर्तिका सा प्रभा युष्मान् सुखयतु ।

Even the terrible storms that uproot the mountains in Pralaya (Universal dissolution) are not able to flicker the flames of the solar lamp. That brilliant lamp, produced by Pataṅga (Sun) is not extinguished by pataṅgas (insects) and keeps away the collyrium-like darkness in the day. May that extra-ordinary lamp of the whole world give you happiness.23

तीव्र वेगसे पर्वतोंको भी विदलित करने वाली, प्रलयकालीन वायुसे भी न बुझने वाली, गहरी उज्ज्वल कान्तिसे युक्त, तमोरूप कज्जलसे रहित, पतङ्गसे (सूर्यसे) जात, और पतङ्गोंसे (छोटा सा कीटों से) न बुझने वाली, सारे जगत्के दीप सदृश उष्णांशु सूर्यके सर्वथा विलक्षण एक वर्त्तिकारूप दीप्ति आप लोगोंको सुखी करें ।।२३।।

**निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा**
**पर्याप्तं नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव ।**

**अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं**
**ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ।।२४।।**

**अन्वयः**—निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा उदयादौ न, दिनगमसमयोपप्लवे अपि पर्याप्तम् उन्नता एव, क्षणमपि तमसा साकम् एकत्र वस्तुं या अत्यन्तम् अनभिज्ञा, ब्रध्नस्य इद्धा रुचिः, रुचिरिव वः उचितस्य वस्तुनः आप्तये अस्तु ।

**व्याख्या**—निःशेषाणां सर्वासाम् आशानां दिशाम् अभिलाषाणां च अवपूरे पूरणे प्रवणः अनुकूलः यः गुरुगुणः तेन श्लाघनीयं प्रशंसनीयं स्वरूपं यस्याः सा रुचिः, न केवलम् उदयादौ, उदयः एव आदिः तस्मिन् उदयकाले, अभ्युन्नतिसमये, दिनगमसमयः दिवसावसानकालः एव उपप्लवः विपत् तस्मिन् अपि पर्याप्तम् उन्नता, एवेति निश्चये, सम्पत्तौ च विपत्तौ च महतामेकरूपता, क्षणम् अपि मुहूर्तमपि तमसा अन्धकारेण दुःखेन च साकम् एकत्र वस्तुं स्थातुम् या अत्यन्तम् अनभिज्ञा अनभ्यस्ता, तमो ध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे इति मेदिनी, ब्रध्नस्य सूर्यस्य इद्धा दीप्ता रुचिः द्युतिः रुचिरिव स्पृहा इव, अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् इत्यमरः, वः युष्माकम् उचितस्य वस्तुनः आप्तये प्राप्तये अस्तु । 'उपमालङ्कारः, वृत्त्यनुप्रासश्च' ।

**भावार्थः**—सर्वासु दिक्षु व्यापकतया पतिता, न केवलम् उदयरूपे अभ्युन्नतिसमये, अस्तरूपे विपत्कालेऽपि समुन्नता, अन्धकारेण साकं कदाचिदपि न तिष्ठन्ती सूर्यस्य द्युतिः युष्माकमभिलाषं पूरयतु । अत्र आशापूर्त्यनुकूला, सर्वदा उन्नता, क्षणमपि दुःखमनभिलषन्ती प्रवृत्तिरिव भास्वरा भास्करद्युतिः इति औपम्यं स्फुरति ।

The bright light of the Sun unaccustomed to associate with darkness, attends eminence not only at the time of rising but also in the inauspicious time of setting. It spreads all over the quarters and possesses commendable excellence. May that light fulfil all your desires. 24

सब आशाओंके (दिशाओंके और अभिलाषाओंके) पूरण करने गुणोंसे प्रशंसनीय, उदय और अस्त (विपद्) समयमें भी एकरूप, एक क्षण भी अन्धकारके साथ निवास करनेमें अत्यन्त अनभिज्ञ, रुचि (स्पृहा)के समान सूर्यकी किरण आपके अभिलाष पूर्ण करें ।।२४।।

**विभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वी**
**कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।**
**आदध्यादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां**
**बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ।।२५।।**

**अन्वय**–प्रशमितबलवत्तारकौर्जित्यगुर्वीं शक्तिं विभ्राणः लसच्चन्द्रकान्तावभासं शिखिनम् अपि लीलया अधःकुर्वाणः, अन्धकारेः वीक्षणानाम् अतिशयिनीं रतिम् आवहन्, अपरः बालः गुहः इव अहर्पतेः आतपः, वः अपारां लक्ष्मीम् आशु आदध्यात् ।

**व्याख्या**–प्रशमितं ह्रासितं बलवत् गुरु तारकाणां नक्षत्राणाम् और्जित्यं तेजस्विता तेनहेतुना गुर्वीम्, अन्यत्र प्रशमितं बलवतः तारकस्य तारकासुरस्य और्जित्यम् ओजस्विता, तेन गुर्वां महतीं शक्तिं, शक्तिरूपमस्त्रं च विभ्राणः धारयन्, लसन् प्रस्फुरन् चन्द्रः इव कान्तः उज्ज्वलः अवभासः दीप्तिः यस्य तम् शिखिनम् अग्निम्, अन्यत्र लसद्भिः चन्द्रकैः अन्तावभासः यस्य तम्, समुज्ज्वलचन्द्रकप्रान्तैः पत्रैः शोभमानं शिखिनं मयूरम्, अधः कुर्वाणः तिरस्कुर्वाणः, अन्यत्र वाहनं कुर्वाणः, अन्धकारे तमसि वीक्षणानां चक्षुषाम् अतिशयिनीं रतिं रुचिम् आवहन्, अन्यत्र अन्धकारेः शिवस्य नेत्रानन्दं जनयन्, अपरः बालः गुहः कार्तिकेयः इव, अहर्पतेः सूर्यस्य बालः आतपः अपारां लक्ष्मीं समृद्धिम् आशु शोघ्रम् आदध्यात् विदधातु । वृत्त्यनुप्रासोऽलङ्कारः श्लिष्टा उपमा च, तयोः सङ्करः ।

**भावार्थः**–तारकासुरविनाशकः, शक्तिरूपम् अस्त्रं धारयन्, चन्द्रकशोभितं मयूरं वाहनीकुर्वन्, अन्धकारेः शिवस्य अवलोकनानन्दं ददानः शिशुः कार्तिकेयः इव तारकाणाम् औज्ज्वल्यम् अपहरन्, चन्द्रवत् उज्ज्वलविग्रहम् अग्निम् स्वप्रभया तिरस्कुर्वन्, अन्धकारे नेत्राणाम् अवलोकनरुचिं जनयन् सूर्यस्य बालातपः, युष्माकम् अविलम्बेन बहुलां समृद्धिं विदधातु ।

The light of the Sun takes away the brilliance of the stars, moon-light, fire and makes eyes long for darkness. It appears like young Kārtikeya who holds Śakti to kill the powerful demon Tāraka and mounting the peacock with crescent-graced feathers attracts the attention of Andhakāri Śiva. May that light bestow prosperity on you.25

तारकासुरका वध करनेकेलिए शक्ति रूप अस्त्र धारण करके चन्द्रकशोभित मयूरको वाहन बनाकर अन्धकारि भगवान् शिवजीको आनन्दित करने वाला शिशु कार्त्तिकेयके तुल्य, ताराओंकी ज्योति अपहरण करता हुआ, चन्द्रके समान उज्ज्वल देहधारी अग्निको अपनी कान्तिसे हटाकर आखोंकी अवलोकन शक्ति देनेवाली सूर्यकी वाल किरण आपकी समृद्धि विधान करें ॥२५॥

**ज्योत्स्नांशाकर्षपाण्डुद्युति तिमिरमसीशेषकल्माषमीष-**
**ज्जृम्भोद्भूतेन पिङ्गं सरसिजरजसा सन्ध्यया शोणशोचिः ।**

**प्रातः प्रारम्भकाले सकलमपि जगच्चित्रमुन्मीलयन्ती**
**कान्तिस्तीक्ष्णत्विषोऽक्ष्णां मुदमुपनयतात्तूलिकेवातुलां वः ।।२६।।**

**अन्वयः**—प्रातः प्रारम्भकाले ज्योत्स्नांशाकर्षपाण्डुद्युति, तिमिरमसीशेषकल्माषम्, ईषज्जृम्भोद्भूतेन सरसिजरजसा पिङ्गं, सन्ध्यया शोणशोचिः सकलम् अपि जगच्चित्रं तूलिका इव उन्मीलयन्ती, तीक्ष्णत्विषः कान्तिः वः अक्ष्णाम् अतुलां मुदम् उपनयतात् ।

**व्याख्या**—प्रातः प्रारम्भकाले प्रभातारम्भे ज्योत्स्नायाः यः अंशः तस्य आकर्षणेन पाण्डुः द्युतिः कान्तिः यस्य तत्, ज्योत्स्नांशाकर्षणेन पाण्डुरवर्णं, तिमिरमेव मसी तस्याः शेषः अवशेषः तेन कल्माषं शवलम्, चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे इत्यमरः, ईषत् जृम्भः विकासः तस्मात् उद्भूतेन जातेन सरसिजरजसा पद्मपरागेण पिङ्गं पिङ्गलवर्णं, सन्ध्यया प्रातःसन्ध्यया शोणं शोचिः यस्य तत्, शोणः कोकनदच्छविः इत्यमरः, रक्तवर्ण जगच्चित्रं तूलिका इव उन्मीलयन्ती प्रकाशयन्ती, तीक्ष्णत्विषः उष्णांशोः कान्तिः वः युष्माकम् अक्ष्णां चक्षुषाम् अतुलां मुदं प्रीतिम् उपनयतात् सम्पादयतु । उपमावृत्त्यनुप्रासयोः सङ्करः ।

**भावार्थः**—चित्रकारस्य तूलिका यथा विविधवर्णमिश्रं चित्रं प्रकाशयति तथा प्रभातारम्भे ज्योत्स्नायाः आकर्षणेन ईषत् शुभ्रम्, अन्धकारावशेषेण ईषत्कृष्णवर्णमिश्रितं, विकासोन्मुखपद्मरजसा पिङ्गलवर्णं, प्रातःसन्ध्यायाः वर्णेन ईषत् रक्तं जगतः चित्रं प्रकटयन्ती सूर्यकान्तिः युष्माकम् आनन्दं जनयतु ।

The rays of the Sun in the early morning unveil like the brush of an artist the beautiful picture of the world, interwoven with white, black, reddish brown and red colours on account of remaining moon light, ink-like darkness, pollens of half-opened lotuses and early appearance of the dawn. May the splendour of the sun please your eyes.26

दिवसके प्रारम्भमें चाँदकी रोशनियोंको खींचनेसे पाण्डुरवर्णवाली अन्धकारमसीके शेष भागसे मिश्रित वर्ण, किञ्चित् विकसित पद्मोंके परागसे पिङ्गलवर्ण, प्रातःसन्ध्यासे लाल, चित्र करके तूलिकासे चित्रित होनेकी भाँति मालूम हुई, जगत चित्रको प्रकाश करनेवाली सूरजकी कान्ति आप लोगोंको आनन्द दें ।।२६।।

**आयान्ती किं सुमेरोः सरणिररुणिता पाद्मरागैः परागै-**
**राहोस्वित्स्वस्य माहारजनविरचिता वैजयन्ती रथस्य ।**
**माञ्जिष्ठी प्रष्ठवाहावलिविधुतशिरश्चामराली नु लोकै-**
**राशङ्क्यालोकितैवं सवितुरघनुदे स्तात् प्रभातप्रभा वः ।।२७।।**

**अन्वयः**—सुमेरोः पाद्मरागैः परागैः अरुणिता आयान्ती सरणिः किम् ? आहोस्वित् स्वस्य रथस्य माहारजनविरचिता वैजयन्ती किम् ? माञ्जिष्ठी प्रष्ठवाहावलिविधुतशिरश्चामराली नु ? एवं लोकैः आशङ्क्य आलोकिता सवितुः प्रभातप्रभा वः अघनुदे स्तात्।

**व्याख्या**—सुमेरोः तदाख्यपर्वतस्य पाद्मरागैः पद्मरागस्य इमे पाद्मरागाः तैः पद्मरागसम्बन्धिभिः परागैः अरुणिता अरुणवर्णविशिष्टा आयान्ती आगच्छन्ती सरणिः मार्गः किम् ? सरणिः पद्धतिः पद्या वर्त्मन्येकपदीति च इत्यमरः । आहोस्वित् स्वस्य रथस्य महारजनस्य इदं माहारजनं हैमं कौसुम्भं वासोवा तेन विरचिता निर्मिता रथस्य वैजयन्ती पताका किम् ? चामीकरं जातरूपं महारजतकाञ्चने इत्यमरः । माञ्जिष्ठी मञ्जिष्ठया रक्ता माञ्जिष्ठी, तेन रक्तं रागात् इति घञ्, स्त्रियां माञ्जिष्ठी, प्रष्ठाः रथाग्रस्थाः ये वाहाः अश्वाः तेषाम् आवलिः पङ्क्तिः तया विधुतानां शिरसां चामराली चामरपङ्क्तिः किम् ? एवम् इत्थं लोकैः आशङ्क्य आलोकिता सवितुः सूर्यस्य प्रभातप्रभा प्राभातिकी कान्तिः वः युष्माकम् अघनुदे अघं पापं नुदतीति अघनुत् क्विप्, तस्मै अघनुदे पापविनाशाय स्तात् भवतु । उत्प्रेक्षालङ्कारः ।

**भावार्थः**—इयं प्रभातप्रभा सुमेरोः पद्मरागपरागैः अरुणिता सरणिः किम् ? अथवा स्वर्णेन, कौसुम्भवस्त्रेण वा विरचिता रथस्य पताका किम् ? अथवा रथस्य अग्रे बद्धाया; अश्वश्रेण्याः मञ्जिष्ठारञ्जिता शिरश्चामराली किम् ? एवमाशङ्क्य जनैः आलोकिता सा प्रभातप्रभा युष्माकं पापविनाशिनी भवतु ।

The early rays of the Sun are looked at anxiously by the people in amazement as to whether they are the paths of Sumeru, studded with dusts of emerald stones? Or the golden banners of the Chariot? or the moving Cāmaras of manjiṣṭhā-colour on the heads of the horses in front? May those rays remove all your sins.27

क्या वह सुमेरुके पद्मरागसे रंजित आने वाला मार्ग है ? अथवा सोनेसे निर्मित रथका पताका है क्या ? अथवा रथके आगे बँधी हुई घोड़ोंके शिर पर कम्पमान मञ्जिष्ठारङ्गवाली चामरपङ्क्ति है क्या ? इस तरह भ्रान्तिसे अवलोकित सूर्यकी प्रभातप्रभा आप लोगोंके पाप दूर करें ॥२७॥

**ध्वान्तध्वंसं विधत्ते न तपति रुचिमन्नातिरूपं व्यनक्ति**
**न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः ।**
**स प्रात र्मा विरंसीदसकलपटिमा पूरयन् युष्मदाशा-**
**माशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः ॥२८॥**

**अन्वयः**—यः ध्वान्तध्वंसं विधत्ते, न तपति, रुचिमत् अतिरूपं न व्यनक्ति, नक्तं न्यक्त्वं नीत्वापि अह्नः त्विषं तावत् न वितरतितराम्, आशाकाशावकाशावतरणतरुण-प्रक्रमः असकलपटिमा प्रातः सः अर्कप्रकाशः युष्मदाशां पूरयन् मा विरंसीत् ।

**व्याख्या**—यः अर्कप्रकाशः ध्वान्तध्वंसं विधत्ते अन्धकारं विनाशयति, न तपति, रुचिमत् किरणोद्भासि अतिरूपम् अतितेजः न व्यनक्ति न प्रकटयति, नक्तं रात्रिं न्यक्त्वं नीत्वापि तिरस्कृत्यापि अह्नः दिवसस्य कान्तिं न वितरतितराम् अतिशयेन न प्रकटयति, आशाकाशावकाशावतरणतरुणप्रक्रमः आशा च आकाशश्च आशाकाशौ तयोः अवकाशः अन्तरालं तत्र अवतरणे तरुणः प्रक्रमः उद्यमः यस्य तथाभूतः, पुनश्च असकलः असमग्रः पटिमा पटुत्वं यस्य तादृक् अर्कप्रकाशः युष्मदाशां युष्माकमभिलाषं पूरयन् मा विरंसीत् विरतः न भवतु । वृत्त्यनुप्रासोऽलङ्कारः ।

**भावार्थः**—प्रातः यः सूर्यातपः अन्धकारं विनाशयति परन्तु अत्यधिकां कान्तिं न प्रकाशयति; रात्रिं तिरस्कृत्यापि दिवसस्य तीक्ष्णं तेजः न प्रकटयति; सर्वासु दिक्षु आकाशे च अवतरणे उद्यतः, अपूर्णप्रकाशः सः आतपः युष्माकम् अभिलाषं सन्ततं पूरयतु ।

The first appearance of the Sun removes the darkness, is not severe and does not reveal its entire splendour. In spite of putting an end to night it does not exhibit the entire glory of the day. It covers all directions, sky, and other spaces. May that first appearance of the Sun not desist from fulfilling all your desires.28

जो अन्धकारका विनाश करते हैं, प्रभामय होनेसे भी तीक्ष्ण नहीं हैं, रातको हटानेसे भी दिवसके उज्ज्वल कान्ति नहीं प्रकटित करते हैं, दिशाओं और आकाशके मध्य भागमें अवतरण करनेकेलिए पहले कोशिश करनेवाली, पूर्णताको नहीं प्राप्त हुए, सूर्यके प्रातःकालीन प्रकाश, आप लोगोंकी आशाओंको पूर्ण करनेसे विरत न हो ॥२८॥

**तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत् प्रकर्षेण चाणु**
**प्रत्यक्षं यत् परोक्षं यदिह यदपरं नश्वरं शाश्वतं च ।**
**यत्सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद् विदन्ति**
**ज्योतिस्तद्द्विप्रकारं सवितुरवतु वो वाह्यमाभ्यन्तरं च ॥२९॥**

**अन्वयः**—यत् तीव्रं निर्वाणहेतुः, यदपि च विपुलं, यत् प्रकर्षेण च अणु, यत् प्रत्यक्षं, यत् परोक्षं, यत् इह, यत् अपरं, यत् नश्वरं, शाश्वतं च, यत् सर्वस्य प्रसिद्धं, यत् जगति कतिपये योगिनः विदन्ति, तत् सवितुः वाह्यम् आभ्यन्तरं च द्विप्रकारं ज्योतिः वः अवतु ।

**व्याख्या**—यत् ज्योति: तीव्रं तीक्ष्णं, निर्वाण हेतु: मोक्षकारणं, यत् विपुलम् अपि च प्रकर्षेण अणु सूक्ष्मं, यत् प्रत्यक्षं दर्शनीयं, परोक्षं च न इन्द्रियग्राह्यं, प्रतिपरसमनुभ्योऽक्ष्ण: इति टच् । यत् इह सन्निकृष्टं यत् अपरं विप्रकृष्टं च, यत् नश्वरं नाशशीलं शाश्वतं नित्यं च, यत् सर्वस्य प्रसिद्धं सर्वै: ज्ञातं, यत् जगति कतिपये केचनैव योगिन: विदन्ति जानन्ति, तत् सवितु: सूर्यस्य वाह्यं वहिर्दृश्यम्, आभ्यन्तरम् अन्तर्दृश्यं योगसमाधिगम्यं द्विप्रकारं द्विधा दृष्टं ज्योति: व: युष्मान् अवतु रक्षतु । विरोधोऽलङ्कार: ।

**भावार्थ:**—यत् तीव्रमपि निर्वाणहेतु: भवति, विपुलमपि अणुवत् सूक्ष्मं, प्रत्यक्षमपि परोक्षं, पृथिव्यां दृष्टमपि अदृश्यं, विनाशशीलमपि चिरन्तनं, सर्वत्र ख्यातमपि यत् पृथिव्यां कतिपये योगिन: एव विदन्ति; तथाभूतं वाह्यम् आभ्यन्तरंच द्विधा दृष्टं रवे: तेज: युष्मान् रक्षतु ।

The ray of the Sun though too hot is the cause of permanent peace. It is vast but very small, visible but beyond comprehension, near but far off, transient but eternal, well-known but very few yogis (asceties) comprehend its true nature. May that ray of the Sun with its double nature internal and external save you all.29

जो तीव्र होनेसे भी मोक्षका हेतु है, जो व्यापक है और विशेष भावसे सूक्ष्म है, जो प्रत्यक्ष और परोक्ष है, जो यहाँ है और दूरमें है, जो नश्वर और शाश्वत है, जिसे सब जानते हैं और खास कर योगी लोगोंका बोधगम्य है, ऐसे सूर्यके वाह्य और आभ्यन्तर दो प्रकारके तेज आप लोगोंकी रक्षा करें ॥२९॥

**रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं**
**वह्नेर्दावादि दग्धुं निजजडिमतया कर्तुमानन्द मिन्दो: ।**
**यत्तु त्रैलोक्यभूषाविधिरघदहनं ह्लादि वृष्ट्याशु तद्वो**
**बाहुल्योत्पाद्यकार्याधिकतरमवतादेकमेवार्कतेज: ॥३०॥**

**अन्वय:**—नियतोद्देशलब्धावकाशं रत्नानां तेज: मण्डनाय, वह्ने: दार्वादि दग्धुम्, इन्दो: निजजडिमतया आनन्दं कर्तुं प्रभवति, यत्तु त्रैलोक्यभूषाविधि:, अघदहनं, वृषट्या आशु ह्लादि, बाहुल्योत्पाद्यकार्याधिकतरं तत् एकम् एव अर्कतेज: व: अवतात् ।

**व्याख्या**—नियतोद्देशलब्धावकाशं नियत: य: उद्देश: स्थानं तत्र लब्ध: अवकाश: प्रकाश: यस्य तत्, कर्णादिषु नियतस्थानेषु एव रत्नानां तेज: मण्डनाय प्रभवति, वह्ने: तेज: दार्वादि दारु प्रभृति एव दग्धुं प्रभवति, नतु रत्नवत् मण्डनाय प्रभवति, इन्दो: तेजश्च निजजडिमतया शीतलत्वेन हेतुना आनन्दं कर्तुं प्रभवति, नतु अग्निवत् दहनाय,

नापि रत्नादिवत् मण्डनाय प्रभवति, परन्तु एकमेव अर्कतेजः त्रैलोक्यभूषाविधिः त्रिभुवनस्य भूषाविधिः भूषणम्, अघदहनं पापनाशकं, वृष्ट्या आशु शीघ्रम् आह्लादि आनन्दप्रदम्, अतएव बाहुल्योत्पाद्यकार्याधिकतरं, बाहुल्येन बहुलतया उत्पाद्यैः कार्यैः कर्मभिः अधिकतरं भवति, तादृशम् अर्कतेजः युष्मान् अवतात् रक्षतु ।

**भावार्थः**—रत्नानां तेजः निश्चितस्थानानां कर्णादीनां मण्डनाय प्रभवति । अग्नेः तेजः काष्ठादीन् दग्धुं प्रभवति । इन्दोस्तेजश्च शीतलतया आनन्दप्रदं भवति । परन्तु सूर्यस्य तेजः त्रैलोक्यभूषणं, पापादिनाशकं, वृष्ट्या शीघ्रमेव आनन्दप्रदं भवति, एवं बहुविधकार्यसम्पादकं श्रेष्ठम् एकमेव अर्कतेजः युष्मान् रक्षतु ।

Gems put in appropriate places enhance beauty, fire burns woods, moon gives pleasure for her cooling nature. But the beam of the Sun discharges all those activities more effectively. It is an ornament of the three worlds. It burns the sins and gives immediate pleasure by causing rains. May that solar light with its multifold actions protect you all.30

रत्न केवल निर्दिष्ट स्थानकी (कान, कण्ठ आदि) शोभा बढ़ाता है, आग सिर्फ लकड़ी वगैरह दहन करती है, चाँद अपनी शीतलतासे केवल आनन्द देता है, लेकिन सूरजके तेज तीन भुवनोंकी शोभा बढ़ाता है, पापको नाश करता है, वृष्टिसे सबको शीघ्र आनन्द देता है, ऐसे एक हुए भी अनेकोंका कार्य करने वाला सूर्यका तेज आपकी रक्षा करें ॥३०॥

**मीलच्चक्षुर्विजिह्मश्रुति जडरसनं निघ्नितघ्राणवृत्ति**
**स्वव्यापाराक्षमत्वक्परिमुषितमनः श्वासमात्रावशेषम् ।**
**विस्रस्ताङ्गं पतित्वा स्वपदपहरतादश्रियं वोऽर्कजन्मा**
**कालव्यालावलीढं जगदगदइवोत्थापयन् प्राक्प्रतापः ॥३१॥**

**अन्वयः**—मीलच्चक्षुः विजिह्मश्रुति, जडरसनं, निघ्नितघ्राणवृत्ति, स्वव्यापाराक्षमत्वक्परिमुषितमनः, श्वासमात्रावशेषं, कालव्यालावलीढं, विस्रस्ताङ्गं, पतित्वा स्वपत् जगत्, अगद इव उत्थापयन् अर्कजन्मा प्राक्प्रतापः वः अश्रियम् अपहरतात् ।

**व्याख्या**—मीलच्चक्षुः मुद्रितनेत्रं, विजिह्मश्रुति क्षीणश्रवणशक्ति, जडरसनं जडा आस्वादनाक्षमा रसना जिह्वा यस्य तत्, निघ्नितघ्राणवृत्ति, निघ्निता अवसन्ना घ्राणवृत्तिः घ्राणव्यापारः यस्य तत्, स्वव्यापाराक्षमत्वक्, स्वस्य व्यापारे अक्षमा असमर्था त्वक् त्वगिन्द्रियं यस्य तत्, परिमुषितं मोहमाप्तं मनः यस्य तत्, तथाभूतं, विस्रस्ताङ्गं विस्रस्तानि शिथिलानि अङ्गानि यस्य तत्, कालव्यालावलीढं, काल एव व्याल; सर्पः तेन

अवलीढं दष्टं, पतित्वा स्वपत् शयानं जगत्, आशीविषो विषधरश्चक्री व्यालः सरीसृपः इत्यमरः । अगदः औषधमिव उत्थापयन् जीवयन् अर्कजन्मा सूर्यात् उद्भूतः प्राक् प्रतापः उदयकालीनरश्मिः वः युष्माकम् अश्रियम् अमङ्गलम् अपहरतात् नाशयतु' उपमा स्पष्टा ।

**भावार्थः**—यथा कश्चन चिकित्सकः औषधं प्रयोज्य सर्पदंशनात् अवशश्रोत्रत्वक्-चक्षूरसनाघ्राणेन्द्रियं निश्चेतनं श्वासमात्रावशेषं भूमौ शयानं शिथिलाङ्गचयं जनं जीवयति, तथैव रात्रौ कालसर्पदष्टं निश्चेतनं सुप्तं जगत् उत्थापयन् प्राभातिकः सौररश्मिः युष्माकममङ्गलं नाशयतु ।

The early rays of morning Sun like antidotes awaken the world falling asleep with eyes closed, sense of hearing gone, taste lost, smell impaired, mind defunct, limbs loosened and only the throbbings of the heart remaining, as if bitten by the time-like snake. May those rays remove all your misfortune.31

ऑख, कान, नाक, जीभ चर्म और मन, इन इन्द्रियोंकी अपने अपने शक्तिसे रहित होकर केवल साँस लेनेवाली दुर्बल सर्पदष्ट व्यक्तिको औषधियोंसे जगानेकी तरह सर्पदष्टके समान सोयी हुई जगतको जाग्रत करनेवाली सूर्यकी पहली किरणें आप लोगोंके अमङ्गल हटाएँ ॥३१॥

**निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि**
**स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः ।**
**दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं**
**वध्याद्ब्रध्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोऽर्चिः प्रचारः ॥३२॥**

**अन्वयः**—अश्रुलेशानुकरि निःशेषं नैशम् अम्भः प्रसभम् अपनुदन्, स्तोकस्तोका-पनीतारुणरुचिः, अचिरात् अस्तदोषानुषङ्गः, त्रिभुवननयनस्य आशु प्रसन्नां दुष्टिं दाता, अपरः सिद्धाञ्जनविधिः ब्रध्नस्य प्राक्तनः अर्चिःप्रचारः युष्मद्विरुद्धं वध्यात् ।

**व्याख्या**—अश्रुलेशानुकारि अश्रुणः लेशम् अनुकरोति इति तथोक्तम् अश्रुविन्दु-तुल्यं, निःशेषं समग्रं नैशं निशायां भवं नैशं रात्रिपतितम् अम्भः जलं प्रसभं बलात् अपनुदन् शोषयन्, स्तोकस्तोकं शनैः अपनीता अपहृता अरुणा रुचिः प्रभा यस्य तथाभूतः, अचिरात् अविलम्बेन अस्तः गतः दोषानुषङ्गः रात्रिसम्पर्कः यस्य सः, त्रिभुवननयनस्य त्रिभुवनप्राणिनां चक्षुषः आशु प्रसन्नां निर्मलां दृष्टिं दाता, अपरः अन्यः सिद्धाञ्जनविधिः सिद्धम् अव्यभिचरितं यत् अञ्जनं तस्य विधिः विधाता, ब्रध्नस्य सूर्यस्य प्राक्तनः पूर्वदिग्भवः अर्चिःप्रचारः किरणप्रसरः युष्मद्विरुद्धं भवदहितं वध्यात् नाशयतु । अनुप्रासोऽलङ्कारः, उपमा चार्थी ।

**भावार्थः**—यथा सिद्धाञ्जनं नेत्रयोः प्रसृतं जलम् अरुणत्वदोषं च शीघ्रं दूरीकृत्य प्रसन्नां दृक्शक्तिं ददाति, तथा अश्रुविन्दुतुल्यं नैशं तुषारं शोषयन्, रात्रिसम्पर्कं त्यक्त्वा शनैः अरुणत्वं दूरीकुर्वन् त्रिभुवननयनस्य निर्मलां दृक्शक्तिं ददानः सूर्यस्य पौरस्त्यः रश्मिराशिः युष्माक ममङ्गलं नाशयतु ।

As fresh siddhānjana (collyrium) dries up tears, removes gradually the redness as well as other defects of the eye, and gives clear vision, so the early rays of the Sun remove nocturnal dew drops resembling tears, shed gradually their redness, leave contact with night and give clear vision to the three worlds. May those rays of the Sun appearing in the east, remove all your evils.32

अश्रु बिन्दुओंके समान रातके तुषारोंको हटानेवाले, धीरेसे अपने अरुण वर्णको गायब करने वाले, अल्प समयसे दोषको दूर करने वाले (रातका सम्पर्क छोड़ने वाले), त्रिभुवनको दर्शनशक्ति देने वाले, सुसिद्ध अञ्जनके तुल्य, सूर्यके पूर्वदिशामें परिदृष्ट किरण प्रवाह आप लोगोंके अनिष्ट दूर करें ॥३२॥

**भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रमानो-**
**र्विभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भाप्रगल्भा ।**
**भूषा भूयिष्ठशोभा त्रिभुवनभवनस्यास्य वैभाकरी प्राग्**
**विभ्रान्ता भ्राजमाना विभवतु विभवोद्भूतये सा विभा वः ।।३३।।**

**अन्वयः**—जम्भस्य भेत्तुः ककुभि शुभ्रभानोः परिभवारम्भभूः भूत्वा बभ्रुभावं विभ्राणा, प्रसभम् अभिनवाम्भोजजृम्भाप्रगल्भा, अस्य त्रिभुवनभवनस्य भूषा भूयिष्ठ-शोभा, प्राक् विभ्रान्ता, भ्राजमाना, सा वैभाकरी विभा, वः विभवोद्भूतये विभवतु ।

**व्याख्या**—जम्भस्य जम्भासुरस्य भेत्तुः विदारकस्य इन्द्रस्य ककुभि दिशि पूर्वस्यां दिशि शुभ्रमानोः शुभ्रः भानुः किरणः यस्य तस्य चन्द्रस्य यः परिभवः अवज्ञा तस्य आरम्भभूः आरम्भभूमिः भूत्वा बभ्रुभावं विभ्राणा पिङ्गलभावं धारयन्ती, प्रसभम् अतिशयेन अभिनवा या अम्भोजानां पद्मानां जृम्भा विकासः तया प्रगल्भा, अस्य त्रिभुवनभवनस्य त्रैलोक्यगृहस्य भूषा भूषणं, भूयिष्ठशोभा अधिकं शोभमाना, प्राक् आदौ विभ्रान्ता भ्रमणशीला व्यापिनीत्यर्थः, भ्रमु चलने इति भौवादिकाद्धातोः क्तः, स्त्रियां टाप्, अनुनासिकस्य क्विझलोः क्ङिति इति दीर्घः । अथवा भ्रमु अनवस्थान इति दैवादि-काद्धातोः निष्पत्तौ, प्राक् रात्रौ अनवस्थिता, इदानीं भ्राजमाना दीप्यमाना । विभ्रान्ति इति पाठे क्रियाविशेषणत्वं न सम्यक् प्रतिपद्यते, सा वैभाकरी विभा विभाकरस्य इयं वैभाकरी

सूर्यसम्बन्धिनी विभा दीप्तिः वः युष्माकं विभवोद्भूतये वित्तवृद्धौ विभवतु प्रभवतु।

**भावार्थः**—पूर्वस्यां दिशि द्योतमाना, चन्द्रं परिभवन्ती, पिङ्गलवर्णा, नूतनपद्म-विकासविदग्धा, त्रिभुवनस्य अलङ्कारभूता, शोभामयी, रात्रौ अनवस्थिता प्रभाते दीप्तिमती, सौरप्रभा युष्माकं समृद्ध्यै सम्पद्यताम्।

Bursting forth beautifully in the eastern sky with red colour and making lotuses bloom, the rays of the Sun cause loss of moon-light; act like an ornament and enhance the beauty of three worlds. May that glorious and roving light of the Sun bring you prosperity.33

चाँदको पराभव देने वाली, कमलोंको विकसित करनेमें निपुण, त्रिभुवनके शोभावर्धक, ताम्रवर्ण, अति मनोहर इन्द्रकी दिशा (पूर्वदिशा)में विराजित, व्यापनशील, सूर्यकी किरणें आप लोगोंकी समृद्धि विधान करें ॥३३॥

**संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या**
**यामिन्या कन्ययेवामृतकरकलसावर्जितेनामृतेन।**
**अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवाला**
**दुद्यन् बालप्रबालप्रतिमरुचिरहःपादपप्राक्प्ररोहः ॥३४॥**

**अन्वयः**—अभिनवभुवनोद्यानकौतूहलिन्या कन्यया इव यामिन्या अमृतकरकलसा-वर्जितेन अमृतेन संसक्तं सिक्तमूलात् उदयशिरश्चक्रवालालवालात् उद्यन् बालप्रवालप्रतिम-रुचिः, अहः-पादपप्राक्प्ररोहः, अर्कालोकः वः मुदं क्रियात्

**व्याख्या**—अभिनवं भुवनं संसार एव उद्यानं तत्र कौतूहलिन्या कौतुकिन्या कन्यया इव यामिन्या रात्र्या कर्त्र्या, अमृतकरः सुधाकरः चन्द्रः स एव कलसः घटः तेन आवर्जि-तेन दत्तेन अमृतेन जलेन संसक्तं निरवच्छिन्नं, क्रियाविशेषणं, सिक्तं मूलं यस्य तस्मात् उदयशिरश्चक्रवालम् उदयाद्रिशृङ्गमण्डलम् एव आलवालम् आवालं तस्मात् उद्यन् उद्भवन्, बालप्रवालप्रतिमः बालप्रवालः इव बालप्रवालप्रतिमः, अस्वपद विग्रहः, "स्यु-रुत्तरपदेत्वमी, निभसंकाशनीकाशप्रतीकाशोपमादयः', इत्यमरः। नूतनकिसलयतुल्यः, प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे इति मेदिनी। बालप्रवालप्रतिमा रुचिः कान्तिः यस्य सः, अहः दिवस एव पादपः, तस्य प्राक् प्ररोहः प्रथमाङ्कुरः अर्कालोकः सूर्यालोकः वः युष्माकं मुदम् आनन्दं क्रियात् करोतु। उपमारूपकयोः सङ्करः।

**भावार्थः**—नूतनभुवनोद्याने न, सृष्ट्यै कौतुकिनी कन्या इव यामिनी चन्द्ररूपेण घटेन उदयाचलस्य शिखरमण्डलरूपे आलवाले जलं दत्तवती। तेन सिक्तात् मूलात्

उद्भूत: नवप्रवालतुल्यकान्ति: दिवसवृक्षस्य प्रथमाङ्कुर: सूर्यालोक: युष्मान् आनन्दयतु ।

**टिप्पणी**—मनोहारिणीयं कल्पना उपमाया: परां कोटिं स्पृशति ।

A night-like maiden desiring to make a new world-like garden waters the peak-like basin (ālavāla) of udayagiri with a moon-like pitcher. From that wet basin bursts forth a solar ray-like sprout of the day-tree. May that ray emerging like a new shoot give you happiness.34

नया भवन-उद्यान बनानेकेलिए कुतुहली कन्याके समान रात चाँद रूपी कलससे उदयाचलके शिरोमण्डल रूप आलवालमें पानी देने लगी । उस आलवालसे निर्गत, नई पल्लवकी भाँति दृश्यमान, दिवसरूप पेड़का नया अङ्कुर, सूर्यके आलोक आप लोगोंको आनन्द प्रदान करें ॥३४॥

**भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव**
**त्वङ्गन्नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च ।**
**नान्तर्निःशेषकृष्णाश्रिय मुदधिमिव ध्वान्तराशिं पिवन् स्ता-**
**दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्काविभासः ॥३५॥**

**अन्वय:**—क्वचित् विद्रुमाणां त्विषा इव अभिनवया अरुणस्य भासा भिन्नं, क्वचित् त्वङ्गन्नक्षत्ररत्नद्युतिनिकरकरालान्तरालं, नान्तर्निःशेषकृष्णाश्रियम् उदधिम् और्व: अग्नि: इव ध्वान्तराशिं पिवन् पूर्व: अपि अपूर्व: अर्काविभास: भवदघप्लुष्टये स्तात् ।

**व्याख्या**—क्वचित् विद्रुमाणां प्रबालानां त्विषा कान्त्या इव अभिनवया नूतनया अरुणस्य भासा द्युत्या भिन्नं सम्वलितं, क्वचित् नक्षत्राणि रत्नानि इव नक्षत्ररत्नानि, त्वङ्गतां स्फुरतां नक्षत्ररत्नानां या द्युति: कान्ति: तस्या: निकरेण समूहेन करालं विचित्रं, न अन्त: निःशषा कृष्णा श्री: कान्ति: यस्मात् तं, ध्वान्तराशे: विशेषणम्, उदधिपक्षे-स्फुरन्ति नक्षत्राणि इव रत्नानि, तेषां द्युतिनिकरेण करालम्, अन्त: मध्यात् न निर्गता: शेषकृष्णाश्रिय: वासुकिविष्णुपद्मा: यस्मात् तम् उदधिम् और्व: अग्नि: बाडवानल: इव ध्वान्तराशिम् अन्धकारसमूहं पिवन् पूर्व: प्राक्तन: अपि अपूर्व: असाधारण: अर्काविभास: सूर्यरश्मि: भवताम् अघप्लुष्टये पापदहनाय स्तात् भवतु । अलङ्कार: उपमा, सा च पूर्णा ।

**भावार्थ:**—क्वचित् अरुणस्य कान्त्या इव विद्रुमाणां प्रभया युक्तं, क्वचित् नक्षत्राणामिव रत्नानां द्युतिनिकरै: दीप्तं, शेषकृष्णश्रीभि: शोभितम् उदधिं पिवन् वडवानल: इव, विद्रुमप्रभया समुद्र इव अरुणकान्त्या युक्तं, रत्नै: उदधिरिव, नक्षत्रै: उद्भासितं ध्वान्तराशिं पिवन् दृष्टपूर्वोऽपि अपूर्व: असाधारण: सूर्यमयूख: भवतां पापराशिं दहतु ।

प्रवालानां रत्नानां च कान्त्या समुद्र इव अरुणस्य नक्षत्राणां च प्रभया ध्वान्तराशिः सम्वलितः, शेषकृष्णश्रीभिः युक्तं समुद्रं पिवन् वडवाग्निः इव, अवशिष्टं भध्वान्तराशिं नाशयन् रश्मिराशिः वः पापं दहतु इत्यर्थ ।

The rays of the Sun remove the darkness like submarine fire consuming water of the ocean where in the shining corals look like the lustre of Aruṇa, gems emitting beams look as flickering stars and make the interior more vicious and wherefrom internal darkness is not removed. May those well-known and wonderful rays of the Sun burn all your sins.35

कहाँ-कहाँ प्रवालोंकी कान्तिसे समुद्रके सदृश, अरुणके नई प्रभासे युक्त, कहीं-कहीं चमकती हुई ताराओंके सदृश रत्नोंके तेजसे विचित्र, अन्दरमें वासुकि विष्णु और लक्ष्मीको धारण करने वाले, काले समुन्द्रके जलको पीनेवाला वाड़वाग्निके समान अन्धकारका नाश करनेवाले सूरजके पुराना होते हुए भी नवीन अनोखा तेज आप लोगोंके पाप क्षय करें ।।३५।।

**गन्धर्वैर्गद्यपद्यव्यतिकरितवचोहृद्यमातोद्यवाद्यै-**
**राद्यैर्यो नारदाद्यैर्मुनिभिरभिनुतो वेदविद्भि र्विभिद्य ।**
**आसाद्यापद्यते यं पुनरपि च जगद् योवनं सद्य उद्य-**
**न्नुद्योतो द्योतितद्यौर्द्यतु दिवसकृतोऽसाववद्यानि वोऽद्य ।।३६।।**

**अन्वयः**—आतोद्यवाद्यैः गन्धर्वैः गद्यपद्यव्यतिकरितवचोहृद्यम्, आद्यैः वेदविद्भिः नारदाद्यैः मुनिभिः विभिद्य यः अभिनुतः, यम् आसाद्य पुनरपि च जगत् यौवनम् आपद्यते, सद्यः उद्यन् द्योतितद्यौः दिवसकृतः असौ उद्योतः अद्य वः अवद्यानि द्यतु ।

**व्याख्या**—आतोद्यं वाद्यं येषां तैः गन्धर्वैः गद्यपद्यैः व्यतिकरितं मिश्रितं यत् वचः तेन हृद्यं मनोरमं यथास्यात्तथा यः अभिनुतः स्तुतः, पुनश्च आद्यैः वेदविद्भिः वेदज्ञैः नारदाद्यैः मुनिभिः विभिद्य विवृत्य विस्तृत भावेन इत्यर्थः, यः अभिनुतः, यम् आसाद्य प्राप्य जगत् पुनरपि यौवनम् आपद्यते लभते, सद्यः उद्यन् उदितः, द्योतिता प्रकाशिता द्यौः स्वर्गः येन स; दिवसकृतः अहस्करस्य सूर्यस्य असौ उद्योतः द्युतिः अद्य वः युष्माकम् अवद्यानि गर्हितानि कर्माणि द्यतु खण्डयतु नाशयतु इत्यर्थः । कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः इत्यमरः । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्, वंश्यादिकं तु शुषिरं कांस्यतालादिकं घनम्, चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् इत्यमरः । इदमस्तु संनिकृष्टं सभीपतरवर्तिचैतदोरूपम्, अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् । वृत्यनुप्रासोऽलङ्कारः ।

**भावार्थः**—यः गन्धर्वैः वीणामृदङ्गवंशीकांस्यतालादिवादनपूर्वकं, वेदज्ञैः नारदादिभिः मुनिभः ध्यानैः गानैश्च सततं स्तूयते, यं प्राप्य जगत् पुनः यौवनं लभते, सहसा आकाशे द्योतमानः असौ सूर्यस्य किरणराशिः युष्माकम् पापानि खण्डयतु ।

**टिप्पणी**—अनुप्रासरसिकस्य कवेः 'द्य' इत्यस्य प्रयोगवैदग्ध्यं विलोकनीयम्। वेदवेद्यैरिति पाठः सम्यङ् नोपपद्यते । अतः वेदविद्भिरिति कृतम् । सम्भवतः मूलं तालपत्रलेखं पठतस्त्रुटिरियम् । अथवा अनुप्रासमोहादेष भ्रमः ।

The Gandharvas playing on four types of musical instruments (ātodya) sing the solar rays in sweet prose and poetry. Nārada and other sages, well-versed in the Vedas praise them vividly. The Universe coming in contact with them regains its youth. May those rays, that spread all over the sky, remove all your evils.36

जिसको गन्धर्व लोग विविध वाद्यवादनपूर्वक स्तुति करते हैं, वेदज्ञ नारदादि प्रधान मुनि भी बिस्तरसे वर्णना करके स्तुति करते हैं, जिसको पाकर जगत् फिर भी यौवन लाभ करता है, सहसा उदित होकर आसमानमें फैलनेवाला दिनकरके यह किरणसमूह शीघ्र आपलोगोके अशुभ कर्म दूर करें ॥३६॥

**आवानैश्चन्द्रकान्तैश्च्युततिमिरतया तानवात्तारकाणा-**
**मेणाङ्कालोकलोपादुपहतमहसा मोषधीनां लयेन ।**
**आरादुत्प्रेक्ष्यमाणा क्षणमुदयतटान्तर्हितस्याहिमांशो-**
**राभा प्राभातिकी वोऽवतु न तु नितरां तावदाविर्भवन्ती ॥३७॥**

**अन्वयः**—आवानैः चन्द्रकान्तैः, च्युततिमिरतया, तारकाणां तानवात्, एणाङ्कालोकलोपात्, उपहतमहसाम् ओषधीनां लयेन, क्षणम् उदयतटान्तर्हितस्य अहिमांशोः आरात् उत्प्रेक्ष्यमाणा, तावत् न तु नितराम् आविर्भवन्ती, प्राभातिकी आभा वः अवतु ।

**व्याख्या**—आवानैः ईषत् शुष्कैः चन्द्रकान्तैः चन्द्रकान्तमणिभिः, च्युततिमिरतया विनष्टान्धकारतया, तारकाणां नक्षत्राणां तानवात् कान्तिहीनतया, एणाङ्कः मृणाङ्कः चन्द्रः, तस्य आलोकलोपात् आलोकक्षयात्, उपहतम् व्याहतं महः तेजः यासां तासाम् ओषधीनां लयेन निष्प्रभतया हेतुना, क्षणम् उदयतटान्तर्हितस्य उदयाचलस्य तटे अन्तर्हितस्य अदृश्यस्य अहिमांशोः तीक्ष्णांशोः सूर्यस्य, अहिमः अंशुः यस्य तस्येति विग्रहः, आरात् समीपे उत्प्रेक्ष्यमाणा अनुमीयमाना, तावत् न तु नितराम् आविर्भवन्ती, तावत् कालं स्पष्टं नाविर्भूता, प्राभातिकी प्रभातकालीना आभा द्युतिः वः युष्मान् अवतु रक्षतु । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।

**भावार्थः**–चन्द्रकान्तमणीनाम् ईषत् शुष्कत्वम्, अन्धकारापसरणं, तारकाणां कान्तिहानिः, चन्द्रालोकक्षयः, ओषधीनां निष्प्रभता च स्पष्टम् असूचयन् यत् उदयतटान्तर्हितः सूर्यः अचिरादेव उदेष्यति । तावत्कालं स्पष्टमदृष्टा सूर्यस्य प्राभातिकी प्रभा युष्मान् अवतु ।

When the moon-stones become dry, stars turn dim, darkness goes away, medicinal plants lose their lustre and the moonlight disappears, the immediate approach of the morning Sun, hidden behind the slopes of Udayagiri, is then inferred. May that approach of the Sun protect you.37

ईषत् शुष्क चन्द्रकान्तमणियों से, अन्धकार दूर होने से, ताराओंके कान्ति क्षयसे, चाँदकी रोशनी नष्ट होनेसे, औषधियोंके मलिनतासे सूचित, उदयाद्रिके पश्चात् विद्यमान, तब तक आविर्भूत नहीं हुई सूर्यके प्रातःकालीन प्रभा आपलोगोंकी रक्षा करें ॥३७॥

**सानौ सा नौदये नारुणितदलपुनर्यौवनानां वनाना-**
**माली मालीढपूर्वा परिहृतकुहरोपान्तनिम्ना तनिम्ना ।**
**भा वोऽभावोपशान्तिं दिशतु दिनपते र्भासमाना समाना**
**राजी राजीवरेणोः समसमय मुदेतीव यस्या वयस्या ॥३८॥**

**अन्वयः**–अरुणितदलपुनर्यौवनानां वनानाम् आलीं न न आलीढपूर्वा, परिहृतकुहरा, तनिम्ना उपान्तनिम्ना, यस्याः समाना वयस्या इव राजीवरेणोः राजिः समसमयम् उदेति, औदये सानौ भासमाना, दिनपतेः सा भा, वः अभावोपशान्तिं दिशतु ।

**व्याख्या**–अरुणितदलपुनर्यौवनानाम् अरुणितानि अरुणवर्णं प्रापितानि यानि दलानि पत्राणि तैः पुनर्यौवनं येषां तेषाम्, प्रौढपत्राणामपि अरुणवर्णसंयोगात् अप्रौढानामिव प्रतीयमानानामितिभावः, वनानाम् अरण्यानाम् आलीं श्रेणीं न न आलीढपूर्वा पूर्वम् आलिङ्गिता इत्यर्थः, द्वौ नञौ प्रकृतार्थवोधकौ । लिह आस्वादने, नपुंसके भावेक्तः । परिहृतानि त्यक्तानि कुहराणि गह्वराणि यया सा, तनिम्ना अल्पशः उपान्ते गह्वरमुखे, तत्सविधे वा निम्ना अधोगामिनी, यस्या; समाना वयस्या इव समकोटिका सखी इव राजीवरेणोः राजिः पद्मपरागपङ्क्तिः समसमयं समकालम् उदेति आविर्भवति, औदये सानौ उदयाचलस्य शृङ्गप्रदेशे भासमाना दीप्यमाना दिनपतेः सूर्यस्य सा भा द्युतिः वः अभावोपशान्तिम् अभावोपशमनं दिशतु करोतु इत्यर्थः । राजीवरेणोः राजिः अपि अरुणितदलपुनर्यौवनानां पद्मवनानाम् आलिः पङ्क्तिरेव आली सखी, तां पूर्वमालिङ्ग्य पद्मगह्वरं परित्यज्य अल्पशः पद्मोपान्ते निपत्य उदयोन्मुखस्य भानो; मरीचिवत् ऊर्ध्वमुत्तिष्ठति । उपमायमकयोः सङ्करः ।

**भावार्थः**—अरुणवर्णेन रञ्जितैः पत्रैः पुनः यौवनं लभमानामिव दृश्यमानाम् अरण्यानीम् आलिङ्गन्ती सूर्यस्य प्रभा गह्वराणि परित्यज्य केवलं गह्वरमुखे तत्सविधे च पतति। तस्याः सवयाः सखी इव पद्मपरागपङ्क्तिः अपि अरुणितदलां नलिनीमालिङ्ग्य पद्मगह्वरं परित्यज्य युगपत् आविर्भवति, उदयाचलस्य शृङ्गप्रदेशे दृश्यमाना सूर्यस्य सा प्रभा युष्माकमभावं पूरयतु।

The rays of the Sun appear on the peaks of Udayagiri simultaneously with friend-like pollens of lotuses. They turn the leaves of forests red and make them look like regaining the youth. Leaving the caves they touch slightly downwards. May those rays fulfil all your desires.38

लाल पत्तोंसे फिर यौवनको प्राप्त होनेकी तरह मालूम हुए, अरण्योंको स्पर्श करनेवाली गह्वरोंको छोड़कर उनके मुखमें कमसे पतित, उदयाचलके शिखरमें फैलनेवाली सूरजकी किरणें आप लोगोंके अभाव दूर करें ॥३८॥

**उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या श्रिये नोष्णतायै**
**पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमाना विघातम्।**
**पूर्वाद्रेरेव पूर्वं दिवमनु च पुनः पावनी दिङ्मुखाना-**
**मेनांस्यैनी विभासौ नुदतु नुतिपदैकास्पदं प्राक्तनी वः ॥३९॥**

**अन्वयः**—या उज्जृम्भाम्भोरुहाणां पयसां श्रिये प्रभवति, नतु उष्णतायै, दृश्यमाना दृशाम् आलोकमात्रं पुष्णाति नतु विघातं दिशति, पूर्व पूर्वाद्रेः एव, दिवम् अनु, पुनश्च दिङ्मुखानां पावनी, नुतिपदैकास्पदं प्राक्तनी असौ ऐनी विभा वः एनांसि नुदतु।

**व्याख्या**—या ऐनी विभा, इनः सूर्यः तस्य इयम् ऐनी सूर्यसम्बन्धिनी द्युतिः, उद्गता जृम्भा विकासः येषां तथाभूतानाम् अम्भोरुहाणां पद्मानां श्रिये शोभायै प्रभवति, नतु उष्णतायै कल्पते, दृश्यमाना अवलोक्यमाना, दृशां चक्षुषाम् आलोकमात्रं पुष्णाति वर्धयति, न तु विघातं वाधां दिशति सृजति, पूर्वं प्रथमतः पूर्वाद्रिः उदयाचलस्य, ततः दिवम् अनु स्वर्लोकस्य, पश्चात् पुनः दिङ्मुखानां पावनी पवित्रकारिणी, नुतिपदैकास्पदं नुतिपदस्य स्तुतिकर्मणः एकम् आस्पदं स्थानं, 'स्तवःस्तोत्रं स्तुतिर्नुतिः', 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति चामरः। प्राक्तनी पूर्वदिग्भवा असौ ऐनी विभा प्रभा वः युष्माकम् एनांसि पापानि नुदतु नाशयतु। इनः सूर्ये प्रभौ इत्यमरः।

**भावार्थः**—सूर्यस्य या प्राभातिकी प्रभा कमलानां विकासेन जलानां श्रियं वर्धयति, नतु उष्णतां जनयति, चक्षुषां दर्शनशक्तिं पुष्णाति, न तु कामपि वाधां सृजति, आदौ पूर्वाद्रिः, तदनु दिवः, ततश्च दिङ्मुखानां पवित्रकारिणी पूर्वदिग्भवा सा सूर्यस्य पूज्या

प्राभातिकी प्रभा युष्माकं पापानि नाशयतु ।

The rays of the Sun appearing in the east lighten first the eastern mountain, then the sky and later on the quarters. They enhance the beauty of water by opening up the lotuses, but do not make it hot; help the eyes to see clearly without reducing their power. May those praise worthy rays of the Sun remove all your sins.39

जो विकसित पद्मोंको धारण करनेवाली पानीकी शोभाको बढ़ाती है, पर गरम नहीं करती, आँखोंके रोशनी बढ़ाती, बाधा नहीं देती, पहले पूर्वाचल, उसके बाद आकाश और अनन्तर दिशाओंको पवित्र करनेवाली पूज्य यह सूरजकी प्रभा आप लोगोंके पाप नाश करें ॥३९॥

**वाचां वाचस्पतेरप्यचलभिदुचिताचार्यकाणां प्रपञ्चै-**
**वैरञ्चानां तथोच्चारितचतुरऋचां चाननानां चतुर्णाम् ।**
**उच्येतार्चासु वाच्यच्युतिशुचिचरितं यस्य नोच्चैर्विविच्य**
**प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषो वः ॥४०॥**

**अन्वयः**–अर्चासु यस्य वाच्यच्युतिशुचिचरितम्, अचलभिदुचिताचार्यकाणाम् उच्चारित चतुरऋचां, वैरञ्चानां चतुर्णाम् आननानां, वाचस्पतेः अपि वाचां प्रपञ्चैः उच्चैः विविच्य न उच्येत, तस्य चण्डार्चिषः चकासत् प्राच्यं वर्चः वः चिरम् उपचिनुतात् ।

**व्याख्या**–अर्चासु पूजासु यस्य रवेः वाच्यच्युतिशुचिचरितं वाच्यस्य वक्तव्यस्य च्युतिः अवसानं यस्मिन् तत् अनिर्वचनीयं शुचिचरितं शुद्धचरितम्, अचलं भिनत्ति इति अचलभित् इन्द्रः, तस्य उचिताः योग्याः ये आचार्याः एव आचार्यकाः तेषां, पुनश्च अः विष्णुः, तत्सम्बद्धाः ऋचः अऋचः, शाकपार्थिवादिवत् समासः, विष्णुर्हि सूर्यरूप इत्यागमः । ऋत्यकः इति, प्रगृह्यभावः । उच्चारिताः चतस्रः अ ऋचः यैः तेषाम् वैरञ्चानां विरञ्चेः ब्रह्मणः इमे वैरञ्चाः, तेषां चतुर्णाम् आननानां मुखानां, वाचस्पतेः बृहस्पतेः अपि वाचां गिरां प्रपञ्चैः विस्तारैः उच्चैः विविच्य सम्यक् विचार्य न उच्येत वर्णयितुं न शक्येत, तस्य चण्डार्चिषः उष्णांशोः सूर्यस्य चकासत् दीप्तं, प्राच्यं प्राचि भवं प्राच्यं पूर्वस्यां दिशि दृश्यमानं वर्चः तेजः वः युष्मान् चिरम् उपचिनुतात् पुष्णातु । युष्माकं समृद्धिं सम्पादयतु इत्यर्थः । अनुप्रासोऽलङ्कारः ।

**भावार्थः**–चतुर्वेदपाठपटुभिश्चतुर्भिः मुखैः ब्रह्मा, बृहस्पतिः अपि, इन्द्रस्य अन्ये आचार्याश्च यस्य अनिर्वचनीयं शुद्धं चरितं बहु विविच्यापि सम्यक् वर्णयितुं न प्रभवेयुः, तस्य चण्डांशोः सूर्यस्य पूर्वस्यां दिशि दृश्यमानं दीप्तं तेजः युष्माकं समृद्धिं सम्पादयतु ।

**टिप्पणी**—ऋक् पदमिह मन्त्रसामान्यवाचि । 'च' इत्यस्य प्रयोगवैचित्र्यं लक्षणीयम् । चतुररुचामिति प्रयोगस्य औचित्यं चिन्त्यम्' ।

Vācaspati, other ācāryas of Indra and four mouths of Virañci, well versed in reciting the mantras of four Vedic hymns fail, inspite of their sincere efforts to depict the inscrutable and pious deeds of the Sun. May the rays of that Sun, appearing in the east endow you with everlasting prosperity.40

जिसके पवित्र अनिर्वर्णनीय गुणोंको इन्द्रके बड़े आचार्य, चतुर्वेद पाठ करनेमें पटु ब्रह्माके चार मुख और बृहस्पति भी बहुत विवेचना करके ठीक भावसे वर्णन नहीं कर सकते हैं, उसी उष्णांशुके पूर्वदिशामें प्रकाश पानेवाली कान्ति आपकी समृद्धि विधान करें ॥४०॥

**मूधर्न्यद्रेर्धातुराग स्तरुषु किसलयो विद्रुमौघः समुद्रे**
**दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररेणुः ।**
**सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः**
**शोणिम्नासौ खरांशोरुषसि दिशतु वः शर्म शोभैकदेशः ।।४१।।**

श्लोकेऽस्मिन् धातुरागकिसलयादि-पदानां प्रथमान्तत्वे अन्वयः सम्यङ्नोपपद्यते, पञ्चम्यन्तः पाठः युज्यते । अत स्तथैव लिखितम् । तथा सति नापिच्छन्दोहानिः ।

**मूर्ध्न्यद्रेर्धातुरागात्तरुषु किसलयाद् विद्रुमौघात्समुद्रे**
**दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितात्सान्द्रसिन्दूररेणोः ।**
**सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः**
**शोणिम्नासौ खरांशोरुषसि दिशतु वः शर्म शोभैकदेशः ।।४१।।**

**अन्वयः**—उषसि खरांशोः शोणिम्ना अद्रेः मूर्ध्नि धातुरागात्, तरुषु किसलयात्, समुद्रे विद्रुमौघात्, दिङ्मातङ्गोत्तमाङ्गेषु अभिनवनिहितात् सान्द्रसिन्दूररेणोः, सीम्नि व्योम्नः सुरशिखरिभुवः हेम्नः यः प्रकाशः जायते, शोभैकदेशः असौ वः शर्म दिशतु ।

**व्याख्या**—उषसि प्रभाते खरांशोः उष्णांशोः शोणिम्ना रक्ताभया अद्रेः पर्वतस्य मूर्ध्नि शिरसि धातुरागात् धातूनां गैरिकधातूनां रागात्, तरुषु वृक्षेषु, किसलयात् पल्लवात्, समुद्रे विद्रुभौघात् प्रवालसमूहात्, स्तोमौघनिकरव्रातवारसंघातसञ्चयाः इत्यमरः । दिङ्मातङ्गानां दिग्गजानाम् उत्तमाङ्गेषु शिरःसु अभिनवनिहितात् सद्यःस्थापितात् सान्द्रः घनः यः सिन्दूररेणुः सिन्दूररजः तस्मात्, सीम्नि व्योम्नः आकाशस्य, सुरशिखरी देवगिरिः मेरुः तस्मात् भवतीति तस्मात्, मेरुः सुमेरुर्हेमाद्रीरत्नसानुः सुरालयः इत्यमरः ।

मेरुजातात् हेम्न: स्वर्णात्, हेम शब्द: रत्नसामान्यसूचक:, य: प्रकाश: या द्युति: जायते, शोभैकदेश: सर्वशोभाया: एकमास्पदम् असौ प्रकाश: व: युष्माकं शर्म सुखं दिशतु विदधातु । अनुप्रासोऽलङ्कार:, तद्गुणश्च ।

**भावार्थ:**—उषसि सूर्यस्य अरुणया प्रभया मेरो: मूर्ध्नि धातुरागात्, वृक्षेषु पल्लवात्, समुद्रे प्रवालसमूहात्, दिग्गजानां शिर:सु सद्योनिहितात् घनसिन्दूररजस:, सीम्नि व्योम्न:, सुमेरोरुत्पन्नात् सुवर्णाच्च य: प्रकाश: जायते या समुज्ज्वला द्युति: उत्पद्यते, तेषां सर्वतेजसामाकर: सूर्यस्य स: प्रकाश: युष्माकं सुखं विदधातु ।

The splendour seen in the minerals on the peaks of mountain, in the new leaves of the trees, in corals of oceans, in the fresh vermilion on the heads of diggajas and in the gold of divine mountain meru at the skirt of the sky, is only the out-come of purple red rays of the Sun. May that abode of all splendour make you happy.41

प्रभातकालीन सूर्यके लाल किरण द्वारा पर्वतके शिखर पर धातुओंके रागसे, पेड़ोंके कोमल पत्तोंसे, समुद्रके प्रवालोंसे, दिग्गजोंके शिर पर नये दिये हुए सिन्दूर रजसे, आकाशके सीमापर स्थित मेरु पर्वतके सुवर्णोंसे जो कान्ति निर्गत होती है, उन सबका एकमात्र आधार सूर्यकी किरण आपका मङ्गल विधान करें ।।४१।।

**अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमःकालकूटे निपीते**
**यांति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषःपारिजाते ।**
**उद्यन्त्यारक्तपीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानो-**
**र्लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटोपाश्रया श्रेयसे वः ।।४२।।**

**अन्वयः**—अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि, तमःकालकूटे निपीते, अरुणकिसलये प्रत्युषःपारिजाते व्यक्तिं याति, आरक्तपीताम्बरविशदतरोद्वीक्षिता, स्फुटकमलपुटोपाश्रया लक्ष्मीरिव तीक्ष्णभानो: पुरस्तात् उद्यन्ती लक्ष्मी: व: श्रेयसे अस्तु ।

**व्याख्या**—अस्ताद्रिश्च ईशश्च तयो: अस्ताचलशिवयो: उत्तमाङ्गे शिरसि श्रित: शशी तस्मिन्, भावे सप्तमी, तम: एव कालकूट: तस्मिन् निपीते, अन्धकारे अपसरति, अन्यत्र तम: इव कालकूट:, तस्मिन् निपीते, अरुणं किसलयं मञ्जरी यस्य तथाभूते प्रत्युष: पारिजाते प्राभातिके पारिजातकुसुमे, अरुणपल्लवे पारिजातवृक्षे च व्यक्तिं याति प्रकाशं गते, आरक्त: अनुरक्त: य: पीताम्बर: विष्णु:, तेन विशदतरं स्पष्टतरम् उद्वीक्षिता दृष्टा, अन्यत्र आरक्तपीते अम्बरे आकाशे स्पष्टं दृश्यमाना, स्फुटं विकसितं यत् कमल-पुटं तत्र उपाश्रया विद्यमाना लक्ष्मी: इव तीक्ष्णभानो: उष्णांशो: पुरस्तात् पूर्वस्यां दिशि

उद्यन्ती लक्ष्मीः शोभा वः युष्माकं श्रेयसे मङ्गलाय अस्तु । श्लिष्टोपमा 'अनुप्रासश्च' ।

**भावार्थः**—चन्द्रे अस्ताद्रिशिखरं गते, अन्धकारे अपसरति, अरुणपल्लवे प्राभातिके पारिजातकुसुमे विकसिते, अपरपक्षे समुद्रमन्थनावसरे चन्द्रे शिवशिरसि स्थिते, शिवेन कालकूटे निपीते, अरुणपल्लवे पारिजातवृक्षे आविर्भूते, अनुरागिणो पीताम्बरेण सोत्कण्ठं वीक्षिता, कमलासीना समुद्रात् आविर्भवन्ती लक्ष्मीः इव, आरक्तपीते अम्बरे पूर्वस्यां दिशि प्रकाशमाना सूर्यस्य प्रभा युष्माकं मङ्गलं विदधातु ।

When darkness-like Kālakūta is drunk, the Pārijāta tree with its tender leaves becomes visible, moon reaches the crest of Asṭādrīśa (Astācala/Śiva), the beauty of the morning Sun emerges in the East. It looks like Lakṣmī dressed in reddish-yellow cloth, seated on the blooming lotus and lovingly watched by yellow-robed Hari. May that solar beauty bring you prosperity.42

अस्ताद्रिके और भगवान शिवजीके शिर पर चन्द्र आश्रित होने पर अन्धकार रूपी कालकूटको पीनेके बाद, प्रभातमें लाल पत्तोंको धारण करते हुए पारिजात वृक्ष और उसके फूल प्रस्फुटित होने पर, भगवान पीताम्बरके द्वारा स्नेहसे अवलोकित, कमलासीना लक्ष्मीकी भाँति, लाल आसमानमें प्रकटित सूर्यकी पूर्व दिशामें शोभित लक्ष्मी आप लोगोंका मङ्गल करें ॥४२॥

**नोदन्वाञ्जन्मभूमिर्न तदुदरभुवो बान्धवाः कौस्तुभाद्या**
**यस्याः पद्मं न पाणौ न च नरकरिपूरःस्थली वासवेश्म ।**
**तेजोरूपापरैव त्रिषु भुवनतलेष्वादधाना व्यवस्थां**
**सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः ॥४३॥**

**इति तेजोवर्णनम्**

**अन्वयः**—यस्याः उदन्वान् न जन्मभूमिः, तदुदरभुवः कौस्तुभाद्याः न बान्धवाः, पाणौ न पद्मं, नरकरिपूरःस्थली च न वासवेश्म, त्रिषु भुवनतलेषु व्यवस्थाम् आदधाना सा अशिशिरमहसः मण्डलाग्रोद्गता, अपरा तेजोरूपा एव श्रीः वः श्रेयांसि दिश्यात् ।

**व्याख्या**—यस्याः श्रियः उदन्वान् उदधिः न जन्मभूमिः, जन्मस्थानं तदुदरभुवः तस्य उदधेः उदरभुवः उदरात् संजाताः कौस्तुभाद्याः न बान्धवाः, पाणौ हस्ते न पद्मं, नरकस्य नरकासुरस्य रिपोः शत्रोः विष्णोः उरःस्थली न वासवेश्म न वासगृहम्, त्रिषु भुवनतलेषु स्वर्गमर्त्यपातालेषु व्यवस्थां स्थितिम् आदधाना, सा अशिशिरम् उष्णं महः तेजः यस्य तस्य सूर्यस्य मण्डलाग्रोद्गता मण्डलोद्भूता अपरा तेजोरूपा श्रीः लक्ष्मीः वः

युष्माकं श्रेयांसि मङ्गलानि दिश्यात् देयात् कुर्यादिति भाव: । लक्ष्मी: विष्णो: उरसि स्थिता, मण्डलोत्था श्रीस्तु त्रिभुवनावस्थानेति व्यतिरेक: ।

**भावार्थ:**—या श्री: सागरात् न संजाता, समुद्रोत्पन्ना: कौस्तुभादय: यस्या: न बान्धवा:, यस्या: पाणौ न पद्मं, नारायणस्य उर:स्थली यस्या: न वासभूमि:, त्रिषु भुवनेषु व्याप्ता, सौरमण्डलात् उत्पन्ना सा श्री: युष्माकं श्रेयांसि विदधातु ।

Śrī (beautiful ray) emerging from the Sun spreads all over the three worlds. She is different from the Goddess Śrī, for ocean is not her place of origin, nor kaustubha and others are her relatives. Neither she holds lotus in her hand, nor resides in the bosom of the killer of Naraka. May that Śrī (beautiful ray) bless you.43

समुद्र जिसकी जन्मभूमि नहीं है, समुद्रसे जात कौस्तुभ आदि जिसके बान्धव नहीं हैं, हाथमें पद्म नहीं है, नरकरिपु विष्णुके वक्षस्थल जिसका निवास स्थान नहीं है, प्रसिद्ध लक्ष्मीसे विलक्षण, तीन भुवनमें वास करनेवाली सूर्यमण्डलसे समुद्भूत दूसरी तेजरूपा लक्ष्मी आप लोगोंका मङ्गल करें ॥४३॥

## अथ अश्ववर्णनम्

**रक्षन्त्वक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्त:**
**पातङ्गा: पङ्ग्ववज्ञा जितपवनजवा वाजिनस्ते जगन्ति ।**
**येषां वीतान्यचिह्नोन्नयमपि वहतां मार्गमाख्याति मेरा-**
**वुद्यन्नुद्दामदीप्तिर्द्युमणिमणिशिलावेदिकाजातवेदा: ॥४४॥**

**अन्वय:**—उद्दामदीप्ति: उद्यन् द्युमणिमणिशिलावेदिकाजातवेदा: मेरौ वहतां येषां वीतान्यचिह्नोन्नयम् अपि मार्गम् आख्याति, अक्षुण्णहेमोपलपटलं लाघवत् अलम् उत्पतन्त: पङ्ग्ववज्ञाजितपवनजवा: ते पातङ्गा; वाजिन: जगन्ति रक्षन्तु ।

**व्याख्या**—उद्दामा प्रभूता दीप्ति: यस्य तथाभूत: उद्यन् प्रकाशमान:, द्युमणि: सूर्य:, तस्य मणिशिला सूर्यकान्तोपल:, तस्या: या वेदिका, तस्या: जातवेदा: तत्प्रभूतोऽग्नि:, मेरौ रथं वहतां येषाम् अश्वानां वीतान्यचिह्नोन्नयम् अपि, वीत: रहित: अन्यचिह्नस्य उन्नय: प्रकाश: यस्मिन् तथाभूतमपि मार्गम् आख्याति प्रकटयति, अक्षुण्णं हेमोपलानां पटलं स्वर्णशिलासंघातं लाघवात् अनायासेन अलम् उत्पतन्त: अतिक्रामन्त:, पङ्गु: इति अवज्ञया जित: पवनस्य जव: वेग: यै: ते तथोक्ता:, पतङ्गस्य इमे पातङ्गा:, पतङ्ग: पक्षिसूर्ययो: इत्यमर:, ते वाजिन: अश्वा: जगन्ति भुवनानि रक्षन्तुं । वाक्यार्थहेतुकं काव्यालिङ्गमलङ्कार: ।

**भावार्थः**—सूर्यकान्तशिलोत्पन्नः उद्दीप्तः अग्निः मेरौ रथं वहतां वाजिनाम् अन्यचिह्नरहितमपि मार्गं सूचयति, हेमाद्रेः अक्षुण्णं स्वर्णपटलम् अनायासेन लंघयन्तः, वायुं पङ्गुंमन्यमानाः, तद्वेगं तिरस्कुर्वाणाः सूर्यस्य ते अश्वाः जगन्ति रक्षन्तु ।

The horses of the Sun ignore the wind as lame and surpass him in swiftness. They leap over the fields of gold lightly without pounding them. The fire produced from the plains of Sunstones indicate their path with no other sign left behind. May those horses protect the world.44

प्रचण्ड दीप्तिके साथ उद्गत सूर्यकान्तमणिशिलापटलकी अग्नि, दूसरे चिह्नोंके बिना भी जिन अश्वोंके यात्रापथ सूचित करता है, अक्षुण्ण स्वर्णपटलको आसानीसे कूदकर याने वाले, पवनको पङ्गु विचार कर उसके वेगको अवज्ञा करके चलनेवाले सूर्यके अश्व जगतकी रक्षा करें ॥४४॥

**प्लुष्टाः पृष्ठेंशुपातैरतिनिकटतया दत्तदाहातिरेकै-**
**रेकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः श्रमेण ।**
**तीव्रोदन्यास्त्वरन्ता महितविहतये सप्तयः सप्तसप्ते-**
**रभ्याशाकाशगङ्गाजलसरलगलावाङ्नताग्रानना वः ॥४५॥**

**अन्वयः**—अतिनिकटतया दत्तदाहातिरेकैः अंशुपातैः पृष्ठे प्लुष्टाः, एकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासशोषाः, श्रमेण तीव्रोदन्याः, अभ्याशाकाशगङ्गाजलसरलगलावाङ्नताग्राननाः, सप्तसप्तेः सप्तयः वः अहितविहतये त्वरन्ताम् ।

**व्याख्या**—अतिनिकटतया दत्तः दाहातिरेकः तापाधिक्यं यैः तैः अंशुपातैः किरणपातैः पृष्ठे प्लुष्टाः तापमाप्नुवन्तः, एकम् अहः एकाहः, राजाहःसखिभ्यष्टच्, टचि टिलोपः, तेन आक्रान्तः कुत्स्नः समग्रः यः त्रिदिवपथः स्वर्गमार्गः, तेन पृथुः श्वासः शोषश्च येषां तथाभूताः, अतएव श्रमेण तीव्रोदन्याः तीव्रा उदन्या पिपासा येषां ते, अभ्याशे समीपे या आकाशगङ्गा तस्याः जलाय सरलाः अवक्राः गलाः येषां तानि अवाङ्नतानि अधःप्रवृत्तानि अग्राननानि मुखाग्राणि येषां ते तथाभूताः, सप्तसप्तेः सूर्यस्य सप्तयः अश्वाः, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः, वः युष्माकम् अहितानां विहतिः तस्यै, अमङ्गलनाशाय त्वरन्तां त्वरान्विताः भवन्तु ।

**भावार्थः**—समीपस्थेन सूर्यस्य किरणेन अश्वानां पृष्ठम् उत्तप्तमभूत् । एकेनैव दिवसेन त्रिदिवपथपरिक्रमणात् दीर्घं निःश्वसन्तः, क्लान्ताः, पिपासवः, समीपवर्तिन्याः स्वर्गङ्गायाः जलपानाय नताननाः, अतएव सरलग्रीवाः, सूर्यस्य ते अश्वाः युष्माकम् अमङ्गलं शीघ्रं विनाशयन्तु ।

The horses remaining close to the Sun, are scorched on their backs. They pant heavily for exertion of traversing three worlds in a day and thereby get thirsty. So they bend their necks for water of swargaṅgā flowing nearby. May those horses hasten in removing your evils.45

अति निकटसे प्रचण्ड किरणपात होनेके कारण पृष्ठ देशमें उत्तप्त, एक दिनमें त्रिभुवनके मार्ग अतिक्रम करनेसे लम्बे साँस छोड़नेवाले, श्रमसे तृषार्त्त होकर निकटमें बहनेवाली स्वर्गङ्गाकी जल पीनेकेलिए मुखको झुकानेवाले सूर्यके अश्व आप लोगोंके अहित दूर करें ॥४५॥

**मत्वान्यान् पार्श्वतोऽश्वान् स्फटिकतटदृषद्दृष्टदेहा द्रवन्ती**
**व्यस्तेऽहन्यस्तसन्ध्येयमिति मृदुपदा पद्मरागोपलेषु ।**
**सादृश्यादृश्यमूर्तिर्मरकतकटके क्लिष्टसूता सुमेरो-**
**मूर्धन्यावृत्तिलब्धध्रुवगतिरवतु ब्रध्नवाहावलिर्वः ॥४६॥**

**अन्वयः**—स्फटिकतटदृषद्दृष्टदेहा, पार्श्वतः अन्यान् अश्वान् मत्वा द्रवन्ती, व्यस्तेऽहनि पद्मरागोपलेषु अस्तसन्ध्या इयम् इति मृदुपदा, क्लिष्टसूता मरकतकटके सादृश्यादृश्यमूर्तिः, सुमेरोः मूर्धनि आवृत्तिलब्धध्रुवगतिः सा ब्रध्नवाहावलिः वः अवतु ।

**व्याख्या**—स्फटिकतटे या दृषद् शिला तस्यां दृष्टः प्रतिविम्बितः देहः यस्याः सा तथाभूता, पार्श्वतः अन्यान् अश्वान् मत्वा द्रवन्ती द्रुतं गच्छन्ती, प्रकृतिरियं वाजिनां यत् ते अन्यान् धावतोऽश्वान् विलोक्य द्रुतं धावन्ति । गत्यर्थकात् द्रुधातोः शतरि ङीप्, समस्तस्य विपरीतं व्यस्तम्, व्यस्ते अहनि असम्पूर्णे दिवसे, पद्मरागोपलेषु पद्मरागशिलासु अस्तसन्ध्या इयमिति, सन्ध्याकालीन पाटलवर्णभ्रान्त्या अस्तसन्ध्या जाता, अलं द्रुतगत्या इति भावनया मुदुपदा मन्दपदविन्यासा धीरं गच्छन्तीत्यर्थः, तस्मात् हेतोः क्लिष्टः द्रुतगत्यर्थं चालनेन क्लेशं प्रापितः सूतः सारथिः यया सा, मरकतकटके मरकतमयतटे, सादृश्यात् हरिद्वर्णसाम्यात् अदृश्या मूर्तिः यस्याः सा, अथवा दृश्या चासौ अदृश्या चेति कर्मधारये, न सम्यक् अवधार्यमाणा मूर्तिः यस्याः सा अतएव क्लिष्टसूता, सुमेरोः हेमाद्रेः मूर्धनि शिरोदेशे आवृत्तिलब्धध्रुवगति; आवृत्त्या लब्धा ध्रुवा गतिः यया सा, ध्रुवो भभेदे क्लीवे तु निश्चिते शाश्वते त्रिषु इत्यमरः, पुनर्लब्धस्वाभाविकाद्रुतगतिः सा ब्रध्नवाहावलिः, ब्रध्नस्य सूर्यस्य वाहावलिः अश्वपङ्क्तिः वः युष्मान् अवतु रक्षतु ।

**भावार्थः**—स्फटिकस्थलीषु आत्मनः प्रतिविम्बं विलोक्य अन्याश्वभावनया द्रुतं धावन्ती, असम्पूर्णेऽपि दिवसे पद्मरागशिलासु सन्ध्या समागता इति विचिन्त्य मन्दगामिनी, तदानीं द्रुतं धावनार्थ यतमानं सारथिं क्लेशयन्ती, मरकतमयतटे वर्णसाम्यात्

अप्रतिविम्बिता, अनवधारितरूपा च सुमेरोः शिरोदेशे पुनर्लब्धद्रुतगतिः सूर्यस्य अश्वावलिः युष्मान् रक्षतु ।

**टिप्पणी**—सन्ध्या त्रिधा प्रातःसन्ध्या, मध्याह्नसन्ध्या, अस्तसन्ध्या चेति ।

The horses mistaking reflections on the crystal stones as other horses by their side, gallop on with tremendous speed. On ruby plains believing the approach of evening, even though the day still remains, they run slow and troubled thereby the charioteer. Their reflections are not seen on plains of green emeralds due to similarity of colour. Afterwards they regain their normal speed on the peaks of Sumeru. May those horses protect you.46

मेरुके स्फटिक तटमें प्रतिविम्बित, अपने पार्श्वमें ये दूसरे अश्व हैं इस भावनासे दौड़ने वाले, सन्ध्या न होनेसे भी पद्मरागशिलाओंमें सन्ध्या आ गई इस भावनासे मन्थर गति वाले, तब चलानेसे सारथिको कष्ट देनेवाले, मरकतमणिमय मध्यदेशमें वर्णसाम्यसे अदृश्य, सुमेरुके ऊपर फिर जोरसे दौड़नेवाले सूर्यके अश्व आप लोगोंकी रक्षा करें ॥४६॥

**हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टा**
**स्वर्वाहिन्याः सुदूरं जनितजवजया स्यन्दनस्य स्यदेन ।**
**निर्व्याजं तायमाने हरितिमनि निजे स्फीतफेनाहिश्री-**
**रश्रेयांस्यश्वपङ्क्तिः शमयतु यमुनेवापरा तापनी वः ॥४७॥**

**अन्वयः**—हेलालोलं वहन्ती, विषधरदमनस्याग्रजेन सुदूरम् अवकृष्टा, स्यन्दनस्य स्यदेन स्वर्वाहिन्याः जनितजवजया, निर्व्याजं तायमाने निजे हरितिमनि स्फीतफेनाहितश्रीः अपरा यमुना इव तापनी अश्वपङ्क्तिः वः अश्रेयांसि शमयतु ।

**व्याख्या**—हेलया लीलया लोलं चञ्चलं वहन्ती यमुना, अनायासेन रथं वहन्ती अश्वपङ्क्तिश्च, विषधरदमनस्य कालीयदमनस्य कृष्णस्य अग्रजेन बलभद्रेण, विषधराणां सर्पाणां दमनस्य गरुडस्य च अग्रजेन ज्येष्ठभ्रात्रा अरुणेन सुदूरम् अवकृष्टा नीता, स्यन्दनस्य प्रवाहस्य रथस्य च स्यदेन वेगेन, स्वर्वाहिन्याः गङ्गायाः जनितः जवस्य वेगस्य जयः यया सा गङ्गायाः वेगं तिरस्कुर्वन्तीत्यर्थः, निर्व्याजं स्वतः तायमाने बृद्धिंगते निजे स्वकीये हरितिमनि हरिद्वर्णे, स्फीतैः फेनैः आहिता लब्धा श्रीः शोभा यया सा, अपरा तापनी तपनस्य अपत्यं स्त्री तापनी सूर्यतनया यमुना इव, तापनी सौरी अश्वपङ्क्तिः वः अश्रेयांसि अमङ्गलानि शमयतु दूरयतु । उपमालङ्कारः ।

**भावार्थः**—कालीयदमनस्य श्रीकृष्णस्य अग्रजेन बलभद्रेण आकृष्य आनीता,

प्रवाहवेगेन गङ्गाया: वेगं जयन्ती, स्वयं हरिद्वर्णा, फेनैः शोभमाना सूर्यतनया यमुना इव राजमाना, द्रुतं धावन्ती, गरुडाग्रजेन सारथिना अरुणेन परिचालिता, रथवेगेन गङ्गाप्रवाहवेगं जयन्ती, मुखफेनैः युक्ता, हरिद्वर्णा सूर्यस्य अश्वपङ्क्तिः युष्माकम् अमङ्गलं दूरयतु ।

The row of the horses of the Sun like another Yamunā with swollen foams and hightened greenness, lead by the elder brother of the vanquisher of serpents. (Aruṇa/Balarāma), play-fully moves on, and outpaces Swargaṅgā by the speed of the chariot. May that row of the horses remove your difficulties.47

लीलासे चञ्चल बहने वाली, कालीय सर्पके दमनकारी भगवान कृष्णके बड़े भाईके द्वारा दूर तक ली गयी, प्रवाहके वेगसे गङ्गाकी वेगको जीतने वाली, अपनी नीलवर्ण बढ़नेके साथ बहु फेनसे युक्त अन्य एक यमुनाकी भाँति, शीघ्र दौड़ने वाली, गरुड़के बड़े भाई अरुणके द्वारा चालित, रथवेगसे गङ्गाको जीतने वाली, मुख फेनसे युक्त हरिद्वर्ण अश्वपङ्क्ति आप लोगोंके अमङ्गल दूर करें ॥४७॥

**मार्गोपान्ते सुमेरोर्नुवति कृतनतौ नाकधाम्नां निकाये**
**वीक्ष्य व्रीडानतानां प्रतिकुहरमुखं किंनरीणां मुखानि ।**
**सूतेऽसूयत्यपीषज्जडगति वहतां कन्धरार्धैर्वलद्भि-**
**र्वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि ॥४८॥**

**अन्वयः**—सुमेरोः मार्गोपान्ते कृतनतौ नाकधाम्नां निकाये नुवति, प्रतिकुहरमुखं व्रीडानतानां किंनरीणां मुखानि सूते असूयति अपि बलद्भिः कन्धरार्धैः वीक्ष्य ईषज्जडगति वहताम् असमहरेः वाहानां ह्रेषितं वः कल्मषाणि समं व्यस्यतात् ।

**व्याख्या**—सुमेरोः हेमाद्रेः मार्गोपान्ते मार्गसमीपे कृता नतिः नमस्कारः यैः तस्मिन्, नाकः स्वर्गः धाम गृहं येषां तेषां देवानां निकाये समूहे नुवति स्तुतिं कुर्वति, भावे सप्तमी, प्रतिकुहरमुखं कुहराणां मुखेषु इति प्रतिकुहरमुखं विभक्त्यर्थे अव्ययीभावः, प्रतिगह्वरमुखं व्रीडया लज्जया नतानां किंनरीणाम् अश्वमुखीनां मुखानि, सूते सारथौ असूयति अनाकांक्षति अपि, बलद्भिः वक्रैः कन्धरार्धैः ग्रीवार्धैः वीक्ष्य अवलोक्य ईषत् जडा शिथिला गतिः यस्मिन् कर्मणि तद् यथा स्यात्तथा क्रियाशिषणं, वहतां गच्छताम्, असमाः हरयः अश्वाः यस्य तस्य सप्ताश्वस्य सूर्यस्य अश्वानां ह्रेषितं ह्रेषारवः, वः युष्माकं कल्मषाणि पापानि, समं युगपत् व्यस्यतात् अपनयतु ।

**भावार्थः**—सुमेरोः मार्गसमीपे उदीयमानं सूर्यं देवाः नमश्चक्रुः । तदानीं नमस्कर-णार्थं स्थितानां, स्वकीयरूपस्य असौष्ठवात् लज्जया अधोमुखीनां, किन्नरीणां मुखानि

विलोकयितुं सूर्याश्वा: सारथे: अरुणस्य इच्छामवमत्य वक्रकन्धरा: अभूवन् । तेषां च गति: कियत्क्षणं शिथिलाभूत् । अश्वानां तत्कालं संजातं ह्रेषितं युष्माकं पापं हरतु ।

The horses of the Sun make the charioteer angry for their slow pace, as they glance bending their heads at the bashful kinnarīs, standing at the entrance of the caves near the path of Śumeru, at the time of prayers by the Gods. May the neigh of those horses ward off all your sins.48

सुमेरु पर्वतके मार्गके पास देवता जब स्तुति करते थे, तब कन्दराओंके द्वार पर स्थित, अश्वमुखी किन्नरियोंके लज्जानत मुखोंको सारथिकी अनिच्छासे भी गरदन टेढ़ी कर दिखते हुए धीरगतिवाले सूर्यके अश्वोंकी हिनहिनाहट आप लोगोंके पाप क्षय करें ।।४८।।

**धुन्वन्तो नीरदालीर्निजरुचिहरिता: पार्श्वयो: पक्षतुल्या-**
**स्तालूत्तानै: खलीनै: खचितमुखरुचश्च्योततालोहितेन ।**
**उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहा: क्रियासु:**
**क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिर:श्रेणिशाखाशुका व: ।।४९।।**

**इति अश्ववर्णनम् ।**

**अन्वय:**—निजरुचिहरिता:, पार्श्वयो: पक्षतुल्या: नीरदाली: धुन्वन्त: तालूत्तानै: खलीनै: श्च्योतता लोहितेन खचितमुखरुच:, वियति गतिवशात् उड्डीय इव व्रजन्त:, हेमाद्रिहृद्यद्रुमशिखरशिर:श्रेणिशाखाशुका: अर्कवाहा: व: क्षेमं क्रियासु: ।

**व्याख्या**—निजा स्वकीया या रुचि: कान्ति: तद्वत् हरिता: हरिद्वर्णा:, पार्श्वयो: पक्षतुल्या: पक्षसदृशा:, नीरदाली: मेघसंहती: धुन्वन्त: कम्पयन्त:, तालूत्तानै: तालु यावत् व्यापिभि: तालु संलग्नै: इत्यर्थ:, खलीनै: कविकाभि: श्च्योतता क्षरता लोहितेन रक्तेन खचितमुखरुच: खचिता युक्ता मुखस्य रुक् कान्ति: येषां ते तथोक्ता:, वियति आकाशे गतिवशात् उड्जीय इव व्रजन्त: धावन्त:, हृद्या: द्रुमा: हृद्यद्रुमा: मनोहरवृक्षा:, हेमाद्रौ ये हृद्यद्रुमा: तेषां शिखराणि इव शिर:श्रेणि: येषां तथाभूता:, शाखाशुका:, शाखाचारिण: शुका: शाकपार्थिवादिवत् समास:, शाखामृगवत् प्रयोग: । अर्कवाहा: सूर्यस्य अश्वा:, वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय: इत्यमर: । व: युष्माकं क्षेमं मङ्गलं क्रियासु: कुर्वन्तु । उत्प्रेक्षालङ्कार: उपमा च ।

**भावार्थ:**—अश्वा: शुकाश्च हरिद्वर्णा:, शुकानां पक्षा: सन्ति, अश्वानामपि पार्श्ववर्तिनी मेघमाला पक्षतुल्या, शुका: लोहितमुखा:, अश्वा अपि खलीनक्षतरुधिरेण रक्तमुखा:, शुका: वियति उड्डीय यान्ति, आकाशे द्रुतं धावन्तोऽश्वा अपि तादृशा: ।

अतएव अश्वशुकयोः सादृश्यं कल्पितं कविना । कस्यचित् मनोहरवृक्षस्य उपरिभागे विद्यमानासु शाखासु विचरन्तः शुका इव हेमाद्रेः शिखरप्रदेशाकाशे धावन्तः सूर्यस्य अश्वाः युष्माकं मङ्गलं विदधतु ।

**टिप्पणी**—केवलं शकारानुप्रासदृष्ट्या शिरःश्रेणि पदं नात्र प्रयोज्यम्, साङ्गत्याभात् । तत् परिवर्त्य सुखाकाङ्क्षीति पाठ्यम्' सुखमानन्दं, सुण्ठु खम् आकाशं वा उड्डयनार्थम् आकाङ्क्षन्तः शाखाशुकाः । एवं विधाने नार्थे वाधा, नापि अनुप्रासे ।

Like green-coloured parrots perched on the tree tops of the beautiful peaks of the golden mountain, flying with flapping their wings in the sky, the horses of the Sun smeared with blood' oozing out of the wounds made by bits of bridles in their mouths, gallop on separating the clouds, resembling wings in both sides. May those horses bless you.49

अपने वर्णके समान और पंखकी भाँति प्रतीत हुई मेघमालाको कम्पित करके उड़ने की भाँति दौड़नेवाले, तालु मे लगे हुए लगामके कारण रक्तस्राव होनेसे रक्तमुख, हेमाद्रि वृक्षके शिखरके समान शिर धारण करनेवाले और शाखाओंमें तोतेके समान दृश्य हुए सूर्यके अश्व आप लोगोंका मङ्गल करें ॥४९॥

## अथ अरुणवर्णनम्

**प्रातः शैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मी-**
**र्विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः ।**
**यामेष्वङ्केष्विवाह्नः कृतरुचिषु चतुर्ष्वेव जातप्रतिष्ठा-**
**मव्यात् प्रस्तावयन् वो जगदटनमहानाटिकां सूर्यसूतः ॥५०॥**

**अन्वयः**—प्रातः शैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मीः उडुनिकरम् एव अपूर्वपुष्पाञ्जलिं विक्षिप्य सूत्रधारायमाणः, कृतरुचिषु अह्नः चतुर्षु यामेषु इव अङ्केषु जातप्रतिष्ठां जगदटनमहानाटिकां प्रस्तावयन् सूर्यसूतः वः अव्यात् ।

**व्याख्या**—प्रातः शैलस्य अग्रम् एव रङ्गः नृत्यमण्डपः, तस्मिन्, रजनिः एव जवनिका तस्याः अपायेन संलक्ष्या लक्ष्मीः यस्य तथाभूतः, रात्रिजवानिकापनयनेन परिलक्षितश्रीः (सूर्यसूतः) उडुनिकरं नक्षत्रसमूहम् एव अपूर्वपुष्पाञ्जलिं विक्षिप्य विकीर्य सूत्रधारायमाणः सूत्रधार इव आचरन्, कृता सृष्टा रुचिः शोभा येषां तेषु अह्नः दिवसस्य चतुर्षु यामेषु प्रहरेषु इव अङ्केषु जाता प्रतिष्ठा स्थितिः ख्यातिश्च यस्याः तथाभूतां, जगदटनं जगद्भ्रमणम् एव महानाटिका तां प्रस्तावयन् सूचयन् सूर्यसूतः सूर्यसारथिः अरुणः वः युष्मान् अव्यात् रक्षतु । रूपकोपमयोः सङ्करः ।

**भावार्थः**—नृत्यमण्डपे जवनिकामपनीय पुष्पाणि विक्षिप्य सूत्रधारः यथा चतुरङ्कां नाटिकां प्रस्तौति, तद्वत् सूर्यसारथिः अरुणः प्रभाते रात्रिरूपां जवनिकाम् अपनीय नक्षत्ररूपम् अपूर्वपुष्पाञ्जलिं विक्षिप्य उदयाद्रिरूपे रङ्गमण्डपे जगद्भ्रमणरूपां, दिनस्य चतुर्षु यामेषु इव चतुर्षु अङ्केषु सुसम्पन्नां, महानाटिकां प्रस्तौति । सः अरुणः युष्मान् रक्षतु ।

**टिप्पणी**—उत्कृष्टकौटिकेयं रूपकोपमासंबद्धा कृतिः ॥

The charioteer of the Sun performs the role of a stage-manager (Sūtradhāra), removes the night-screen, throws star-like flowers on the stage, unveils beautiful scenes, and introduces a nice play of four acts resembling four yāmas of the day, on the topic of great wandering of the world. May that charioteer save you.50

प्रभातमें उदयाचलके उपरिभाग रङ्गमञ्च पर रात्रिरूपी जवनिकाके हट जाने पर सुन्दर दृश्य हुए, सूत्रधारके समान ताराकुसुमों की अपूर्व पुष्पाञ्जलि विकीर्ण करने वाले, सुन्दर भावसे किए हुए दिवसके चार प्रहरके समान चार अङ्कोंसे शोभित जगद् भ्रमणरूप महानाटिकाकी प्रस्तावना करनेवाले सूर्यके सारथि आप लोगोंकी रक्षा करें ॥५०॥

**आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीणां**
**भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी ।**
**शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेऽपि**
**स्थाम्नां धाम्नां निधिर्यः स भवदघनुदे नूतनः स्तादनूरुः ॥५१॥**

**अन्वयः**—यः हरिणा आक्रान्त्या पशुमिव वाह्यमानं, जगति पक्षपातात् भ्राम्यन्तं, वयोज्येष्ठभावे समेऽपि नेत्रश्रुतीनां शत्रुम् अवजयति, हरीणाम् अग्र्यः वाहकः, समरुचिः, सर्वकर्मैकसाक्षी, स्थाम्नां धाम्नां निधिः सः नूतनः अनूरुः भवदघनुदे स्तात् ।

**व्याख्या**—यः अरुणः हरिणा विष्णुना आक्रान्त्या विक्रमेण पशुमिव वाह्यमानं वाहनीक्रियमाणं, जगति भुवने पक्षाणां पातात् चालनात् भ्राम्यन्तं पर्यटन्तं, वयोज्येष्ठभावे वयःसु पक्षिषु ज्येष्ठभावे, अरुणपक्षे वयसा ज्येष्ठभावे समेऽपि, ज्येष्ठत्व मुभयोस्तुल्यं, गरुडः पक्षिषु ज्येष्ठः, अरुणस्तु वयसा, नेत्रे श्रुती कर्णौ येषां तेषां चक्षुःश्रवसां सर्पाणां शत्रुं गरुडम् अवजयति अभिभवति, हरीणाम् अश्वानाम् अग्र्यः श्रेष्ठः वाहकः, समरुचिः समानुरागः, सर्वकर्मैकसाक्षी सर्वकर्मद्रष्टा, स्थाम्नां स्थिराणां धाम्नां तेजसां निधिः निधानं, सः नूतनः अनूरुः भवताम् अघं पापं नुदतीति क्विपि अघनुत् तस्मै अघनुदे पापविनाशाय

स्तात् भवतु । अत्र कविः पदप्रयोगचातुर्येण गरुडात् अरुणस्य वैशिष्ट्यं दर्शयति । व्यतिरेकोऽलङ्कारः ।

**भावार्थः**—गरुडः हरिणा पशुरिव वाह्यते, अरुणस्तु हरीणाम् (अश्वानां) वाहकः, गरुडः पक्षपातेन जगति भ्रमति, अरुणस्तु पक्षपातरहितः, सर्वेषु समानुरागसम्पन्नः, सर्वकर्मणां साक्षद्द्रष्टा च । गरुडः वयःसु ज्येष्ठः, अरुणश्च वयसा ज्येष्ठः गरुडाग्रजः, गरुडः न तेजसां निधानम्, अरुणस्तु तेजोनिधिः । अतएव अरुणः अधिकगुणसम्पन्नः भवति । सः अरुणः युष्माकं पापं खण्डयतु ।

Though equal in seniority (Anūru is senior in age and Garuḍa among birds) Anūru wins over the enemy of snakes (Garuḍa) as he is the chief driver of Haris (horses) where as the latter is used as a draught ȧnimal by Hari; the former looks all equally without being partial but the latter moves with pakṣapāta (partiality/flapping the wings). May that Anūru, the permanent abode of lustre and onlooker of all actions, rising afresh, remove all your sins.51

गरुड़ हरिके पशुतुल्य वाहक है । जगतमें पक्षपातसे (पंखको हिलाकर) भ्रमण करता है, पक्षियोंमें श्रेष्ठ और सर्पोंके शत्रु है, उस गरुड़को हरियोंके (अश्वों के) वाहक, जगतको बिना पक्षपातसे देखने वाले, सब कर्मोंके साक्षी और वयसमें ज्येष्ठ अरुण, स्थायी तेजके आधार होनेसे जीत गया है, वह अनूठ अरुण आप लोगोंके पाप क्षय करें ॥५२॥

**दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीक्षितः सिद्धसाध्यैः**
**सानाथ्यं सारथिर्वः स दशशतरुचेः सातिरेकं करोतु ।**
**आपीय प्रातरेव प्रततहिमपयःस्यन्दिनी रिन्दुभासो**
**यः काष्ठादीपनोऽग्रे जडित इव भृशं सेवते पृष्ठतोऽर्कम् ॥५२॥**

**अन्वयः**—यः दत्तार्घैः दूरनम्रैः सिद्धसाध्यैः वियति विनयतः वीक्षितः, प्रातरेव प्रततहिमपयःस्यन्दिनीः इन्दुभासः आपीय जडित इव अग्रे काष्ठादीपनः पृष्ठतः अर्कं भृशं सेवते, सः दशशतरूचेः सारथिः वः सातिरेकं सानाथ्यं करोतु ।

**व्याख्या**—यः सारथिः दत्तार्घैः दत्तः अर्घः यैः तैः दत्तपूजाद्रव्यैः, मूल्येपूजाविधावर्घः इत्यमरः, दूरात् नम्रैः, सिद्धाश्च साध्याश्च तैः, गन्धर्वगणदेवताभिः, विनयतः सविनयं वियति आकाशे वीक्षितः दृष्टः, प्रातः प्रभाते, एवेति निश्चिये प्रततहिमपयःस्यन्दिनीः, प्रततं बहु यत् हिमपयः हिमजलं तस्य स्यन्दिनीः स्राविणीः

इन्दुभासः चन्द्रद्युतीः आपीय जडितः इव शीतार्त इव, अग्रे काष्ठादीपनः काष्ठं प्रज्वाल्य काष्ठानां दिशाम्, दिशस्तु ककुभः काष्ठा इत्यमरः, आदीपनः प्रकाशकः सन्, पृष्ठतः अर्कं सूर्यं भृशं सेवते, पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम् इति विधेः, सः दशशतरुचेः दशशतं रुचयः यस्य तस्य सहस्रांशोः सारथिः अरुणः वः युष्माकं सातिरेकम्, अतिरेकः आधिक्यम् तेन सह सातिरेकम् अतिशयेन इत्यर्थः, सानाथ्यं सनाथः सप्रभुः, तस्य भावः सानाथ्यं करोतु, सर्वेषु विषयेषु प्रभुत्वं सम्पादयतु इत्यर्थः।

**भावार्थः**—दूरात् नम्राः सिद्धाः साध्याश्च यम् अर्घादिभिः तर्पयितुम् उत्कण्ठिताः सन्तः आकाशे अपेक्षमाणा स्तिष्ठन्ति, यः हिमजलस्राविणीः चन्द्ररुचः निपीय प्रभाते शीतार्त इव अग्रे काष्ठावलीः (इन्धनानि दिशश्च) उद्दीप्य पृष्ठतः अर्कं सेवते, सहस्रांशोः सूर्यस्य सारथिः स अरुणः युष्मान् बहुषु क्षेत्रेषु अधिकारिणः करोतु।

As a man bitten by cold, burns fire and sits facing to it with back towards the Sun, so the charioteer of Sahasrāṅśu (Sun), as if shivering after drinking lunar rays, that shower dew-drops, illuminates the kāṣṭhās (directions) keeping the Sun at his back. May that charioteer bless you with all essentials.52

जिसको आकाशमें दूरसे आनत होकर सिद्ध और साध्य आराधना करते हैं, जो सबेरे हिमांशुके हिम जल पानकर शीतपीडित मानवके समान सामने काष्ठाओंको (दिशाओंको और लकड़ियाँ) उद्दीपित कर पृष्ठ भागसे सूर्यकी सेवा करते हैं, सहस्रांशु सूर्यके वह सारथि आप लोगोंको बहुत क्षेत्रमें अधिकारी करें ॥५२॥

**मुञ्चन् रश्मीन् दिनादौ दिनगमसमये संहरंश्च स्वतन्त्र-**
**स्तोत्रप्रख्यातवीर्योऽविरतहरिपदाक्रान्तिबद्धाभियोगः ।**
**कालोत्कर्षाल्लघुत्वं प्रसभमधिपतौ योजयन् यो द्विजानां**
**सेवाप्रीतेन पूष्णात्मसम इवकृत स्त्रायतां सोऽरुणो वः ॥५३॥**

**अन्वयः**—यः दिनादौ रश्मीन् मुञ्चन् दिनगमसमये संहरन् च स्वतन्त्रः, स्तोत्र-प्रख्यातवीर्यः, अविरतहरिपदाक्रान्तिबद्धाभियोगः, कालोत्कर्षात् द्विजानाम् अधिपतौ प्रसभं लघुत्वं योजयन्, सेवाप्रीतेन इव पूष्णा आत्मसमः कृतः सः अरुणः वः त्रायताम्।

**व्याख्या**—यः सूर्यः अरुणश्चदिनादौ प्रभाते रश्मीन् किरणान् प्रग्रहान् च मुञ्चन् सायं संहरन् सङ्कोचयन् स्वतन्त्रः स्वाधीनः, स्तोत्रेषु प्रख्यातं वर्णितं वीर्यं यस्य सः, अन्यत्र तोत्रे अश्वचालनवेत्रप्रयोगे कुशलः, अविरतं निरन्तरं हरिपदस्य विष्णुपदस्य आक्रान्त्यै आक्रमणाय बद्धः सम्पन्नः अभियोगः प्रयासः यस्य तथाभूतः सूर्यः, अरुणस्तु हरीणाम् अश्वानां पदाक्रान्त्यै आशु पादप्रक्षेपणाय कृतोद्यमः, कालोत्कर्षात् समयप्रभावात्

द्विजानाम् अधिपतौ द्विजराजे चन्द्रे, प्रसभं बलात् लघुत्वं कान्तिहीनत्वं योजयन् (सूर्यः) अरुणपक्षे, द्विजानां पक्षिणाम् अधिपतौ गरुडे लघुत्वम् अवरजत्वं योजयन्, सूर्यः अरुणश्च क्रियासम्पादनदृष्ट्या तुल्यौ प्रतिपादितौ । अरुणस्य सेवया प्रीतः इव सूर्यः तं स्वतुल्यं कुरुते । सः अरुणः युष्मान् त्रायतां रक्षतु । श्लेषोऽलङ्कारः ।

**भावार्थः**—सूर्यः प्रभाते स्वस्य रश्मीन् प्रसारयति सायं संहरति, अरुणश्च प्रभाते शीघ्रधावनार्थम् अश्वानांरश्मीन् (प्रग्रहान्) शिथिलयति, सायंतु सङ्कोचयति, स्तुवतां भक्तानां स्तोत्रेषु सूर्यस्य गौरवं वर्णितम्, तोत्रे (अश्वानां चालनार्थं वेत्रप्रयोगे) अरुणोऽपि कुशलः, सूर्यः हरेः पदं (विष्णुपदम्) आक्रान्तुं चेष्टते, अरुणश्च हरीणां (अश्वानां) शीघ्रं पदचालनार्थं यत्नशीलो भवति, समयक्रमेण सूर्यः द्विजराजं (चन्द्रं) हीनप्रभं कुरुते, अरुणश्च द्विजानां पक्षिणां राजानं गरुडं कनीयान् इति प्रमाणयति । सेवया तृप्तः इव सूर्यः अरुणं कार्यसम्पादनदृष्ट्या आत्मनः समकोटिकं मन्यते । सः सूर्यकल्पः अरुणः युष्मान् रक्षतु ।

Both the Sun and Aruna set free the raśmis (rays/reins) in the beginning and withdraw them at the close of the day independently. Their valour is known from stotra (hymns) and totra (whip). The Sun tries always to go across the sky (Haripada) while Aruṇa hastens the speed of horses (Haris) to go across the sky. Both make dvijādhipati (the moon/Garuḍa, the king of birds) much inferior due to favourable course of time. Thus having been pleased the Sun has elevated Aruṇa to his equal status. May that Aruṇa protect all of you.53

जो प्रभातमें रश्मि (किरण और लगाम)को ढीली करनेमें और सन्ध्यामें संहत करनेमें स्वतन्त्र है, जिसके महिमा स्तोत्रमें वर्णित है, निरन्तर हरिपद (आकाश और अश्वोंका चरण) प्रसरणमें यत्नशील, समयके अनुसार द्विजाधिप (चन्द्र और गरुड़) को लघु बनानेवाले जिस अरुणके सेवामें संतुष्ट होकर सूर्य उसको अपने समान बना लिये हैं, वह अरुण आप लोगोंकी रक्षा करें ।।५३।।

**शातः श्यामालतायाः परशुरिव तमोऽरण्यवह्नेरिवार्चिः**
**प्राच्येवाग्रे ग्रहीतुं ग्रहकुमुदवनं प्रागुदस्तोऽग्रहस्तः ।**
**ऐक्यं भिन्दन् द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधे**
**वाहानां वो विनेता व्यपनयतु विपन्नाम धामाधिपस्य ।।५४।।**

**अन्वयः**—श्यामालतायाः शातः परशुः इव, तमोऽरण्यवह्नेः अर्चिः इव, प्राक्

प्राचि अग्रे एव ग्रहकुमुदवनं ग्रहीतुम् उदस्तोऽग्रहस्तः, द्युभूम्योः ऐक्यं भिन्दन् अवधिः इव, विश्वप्रबोधे विधाता इव, धामाधिपस्य वाहानां विनेता वः विपत् नाम व्यपनयतु ।

**व्याख्या**—श्यामालतायाः श्यामा रात्रिः एव लता तस्याः शातः तीक्ष्णः परशुः कुठारः इव, तमोऽरण्यवह्नेः तमः एव अरण्यं तस्य वह्नेः अर्चिः शिखा इव, प्राक् आदौ प्राचि पूर्वस्यां दिशि, अग्रे एव दृश्यमानं ग्रहकुमुदवनं, ग्रहाः एव कुमुदवनं तत् ग्रहीतुम् उदस्तोऽग्रहस्तः, उदस्तः ऊर्ध्वं कृतः अग्रहस्तः इव, द्युभूम्योः द्यौश्च भूमिश्च द्युभूमी तयोः स्वर्गमर्त्ययोः ऐक्यं भिन्दन् अपनयन् अवधिः सीमा इव, विश्वप्रबोधे विश्वस्य प्रबोधे जागरणे विधाता प्रजापतिः इव, धाम्नां तेजसाम् अधिपस्य सूर्यस्य वाहानाम् अश्वानां विनेता चालकः अरुणः वः युष्माकं विपन्नाम विपदं, नाम इति अव्ययं तदर्थकम्, व्यपनयतु विनाशयतु । मालोपमालङ्कारः ।

**भावार्थः**—रात्रिलतायाः छेदने तीक्ष्णः कुठारइव तमोऽरण्यदहने वनाग्नेः शिखा इव द्योतमानः, प्राच्यां दिशि आदौ ग्रहरूपं कुमुदवनं ग्रहीतुं प्रसारितकरः इव, स्वर्गमर्त्ययोः सीमाभेदक इव लक्ष्यमाणः, जगज्जागृतिहेतुः ब्रह्मेव, सूर्याश्वानां चालकः अरुणः युष्माकं विपदं दूरयतु ।

**टिप्पणी**—तमोऽरण्यवह्नेरिवार्चिः इति पाठस्य स्थाने "तमोऽरण्यदाहे दवाभः" करणीयम् । 'प्राच्येवाग्रे' पदं परिवर्त्य प्राचीवाग्रे इति पठनीयं मन्ये । पुनश्च ग्रहकुमुद, रुचिं विधेयम् । तथा कृते पूर्वार्धमेवं स्यात्–

**शातः श्यामालतायाः परशुरिव तमोऽरण्यदाहे दवाभः ।**
**प्राचीवाग्रे ग्रहीतुं ग्रहकुमुदरुचिं प्रागुदस्तोऽग्रहस्तः ।।**

The controller of the horses of the supreme source of energy (viz. Sun) appears as a sharp-edged axe of the night-creeper, and as a flame of fire, visible in darkness-forest. He stretches his hands upwards to grab first the planet-lilies of the east. He looks like a demarcatng line between the earth and the sky. He also appears as the Vidhātā (creator) in awakening the universe. May he emove all your difficulties.54

रात्रि रूपी लताकी छेदनमें तीक्ष्ण कुठारकी भाँति, अन्धकाररूपी अरण्यमें प्रदीप्त अग्निज्वालाके समान, पूर्वदिशामें पहले नक्षत्र और कुमुदोंको अपहरण करनेकेलिए कर बढ़ाने वाले, आकाश और पृथिवीकी एकरूपता दूर करनेवाली सीमा रेखाके सदृश, संसार सृष्टि करनेवाले विधाताके तुल्य, सूर्याश्वोंके चालक अरुण आप लोगोंके विपद दूर करें ।।५४।।

**पौरस्त्यस्तोयदर्तोः पवन इव पतन् पावकस्येव धूमो**
**विश्वस्येवादिसर्गः प्रणव इव परं पावनो वेदराशेः ।**
**सन्ध्यानृत्योत्सवेच्छो रिव मदनरिपोर्नन्दिनान्दीनिनादः**
**सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ।।५५।।**

**अन्वयः**—तोयदर्तोः पौरस्त्यः पवनः इव पावकस्य पतन् धूमः इव, विश्वस्य आदिसर्गः इव, वेदराशेः परं पावनः प्रणवः इव, सन्ध्यानृत्योत्सवेच्छोः मदनरिपोः नन्दिनान्दीनिनादः इव सौरस्य स्यन्दनस्य अग्रे विनतानन्दनः वः सुखं वितरतु ।

**व्याख्या**—तोयदर्तोः तोयदः यः ऋतुः तस्य वर्षर्तोः अग्रे पौरस्त्यः पूर्वदिग्भवः पवनः इव वायुरिव, वर्षर्तोः प्राक् पूर्वदिग्भवः पवनः वृष्टिं सूचयति, पावकस्य पतन् उद्भवन् धूमः इव, विश्वस्य आदिसर्गः इव, प्रथमसृष्टिः इव अपएव ससर्जादौ इति श्रुतेः, वेदराशेः चतुर्णां वेदानां परं पावनः पवित्रकारी प्रणवः ओंकारः इव, मन्त्रपाठात् पूर्वम् ओंकारः उच्चार्यते, सन्ध्यानृत्योत्सवेच्छोः सन्ध्यायां नर्तनोत्सुकस्य मदनरिपोः शिवस्य नन्दिनान्दीनिनादः इव, नन्दिना आनन्देन विहितः पटहनादः इव, सौरस्य स्यन्दनस्य सूर्यरथस्य अग्रे स्थितः विनतानन्दनः अरुणः वः युष्मभ्यं सुखं वितरतु। मालोपमालङ्कारः ।

**भावार्थः**—वर्षर्तोः प्राक् पूर्वदिग्भवः पवनः इव, ज्वलनोन्मुखस्य अग्नेः प्राक् धूमः इव, विश्वसृष्टेः प्राक् सृष्टं जलमिव, वेदमन्त्रपाठात् प्राक् उच्चार्यमाणः ओंकार इव, ताण्डवेच्छोः शिवस्य नर्तनात् प्राक् नन्दिकृतः आनन्दोत्थः पटहनाद इव, सूर्यरथस्य अग्रे उपविष्टः अरुणः युष्मभ्यं सुखं वितरतु ।

As the eastern wind comes before the rains, smoke before fire, the first one (i.e. water) before creation of the universe, the holy oṁkar, before the Vedas, and the melodious sound of drum, made by Nandī, before the evening dance of Śiva, so Aruṇa sits before the Sun in the chariot. May he confer happiness on you.55

वर्षा ऋतुके पहले पूर्वी पवनकी भाँति, अग्निके पहले धूमके समान, सृष्टिके आदिसर्ग जलके तुल्य, वेदमन्त्रोंके पहले पवित्र प्रणव (ओंकार)के सदृश, शिवजीके सन्ध्याकालीन नृत्यके पूर्व नन्दीके द्वारा कीगयी वाद्यध्वनिके समान, सूर्यरथके सम्मुख भागमें बैठे हुए विनतापुत्र अरुण आप लोगोंको सुख दें ॥५५॥

**पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशा-**
**वासीदत्स्यन्दनाश्वानुकृतिमरकते पद्मरागायमाणः ।**

**यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरो-**
**रेनांस्यह्नाय दूरं गमयतु स गुरुः काद्रवेयद्विषो वः ।।५६।।**

**अन्वयः**—कुलक्ष्माभृदीशस्य मेरोः शिलष्टशीतेतरांशौ तप्तचामीकरकटकतटे आसीदत्स्यन्दनाश्वानुकृतिमरकते पद्मरागायमाणः यः विभूषां पर्याप्तं सोत्कर्षां कुरुते इव, सः काद्रवेयद्विषः गुरुः वः एनांसि अह्नाय दूरं गमयतु ।

**व्याख्या**—कुलक्ष्माभृदीशस्य कुलक्ष्माभृत्सु ईशः, तस्य कुलपर्वतेश्वरस्य महेन्द्रादयः कुलाचलाः सप्त । "महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" । मेरोः शिलष्टः संलग्नः शीतेतरांशुः उष्णांशुः यत्र तादृशे तप्तचामीकरकटक-तटे चामीकरपूर्णं कटकं चामीकरकटकं शाकपार्थिवादिवत् समासः, तप्तं यत् चामीकर-कटकं तस्य तटे, हेममयमध्यदेशे, आसीदत्स्यन्दनाश्वानुकृतिमरकते, आसीदन्तः गच्छन्तः अवसन्ना वा ये स्यन्दनाश्वाः रथाश्वाः तेषाम् अनुकृतिः प्रतिविम्बम् एव मरकतं मरकतमणिः तस्मिन् पद्मरागायमाणः पद्मरागः इव आचरति पद्मरागायते, कर्तुः क्यङ् सलोपश्च इति आचारेऽर्थे क्यङ्, पद्मरागायते इति पद्मरागायमाणः यः अरुणः विभूषां शोभां पर्याप्तम् अतिशयेन सोत्कर्षाम् उत्कर्षसहितां कुरुते इव राजते, काद्रवेयद्विषः सर्पशत्रोः गरुडस्य गुरुः सः अरुणः वः युष्माकम् एनांसि पापानि अह्नाय झटिति दूरं गमयतु नाशयतु ।

**भावार्थः**—कुलाचलाधीशस्य मेरोः सौरप्रभोद्भासिते हेममयकटके अश्वानां प्रतिविम्बानि मरकतानीव अदृश्यन्त । तत्र पद्मरागवत् राजमानः अरुणः शोभाम् अतिशयेन अवर्धयत् । सर्पद्विषः गरुडस्य ज्येष्ठभ्राता सः अरुणः युष्माकं पापम् अचिरादेव खण्डयतु ।

When the Sun remains in the middle of shining golden region of Meru, the lord of mountains (Kulācalas), and the horses of the Chariot resemble emerald stones, Aruṇa, looking like ruby, creates an exquisite beauty. May that Aruṇa, the elder brother of Garuda (The enemy of snakes) remove all your vices.56

सूर्यकिरणोंसे उद्भासित पर्वतेश मेरुके स्वर्णमय कटि देशमें अश्वोंके मरकतपटलोंके समान प्रतिविम्बोंके ऊपर पद्मरागकी भाँति जो सुषमाको और भी बढ़ा देते हैं, वह सर्पशत्रु गरुड़के बड़े भाई अरुण आप लोगोंके पापका शीघ्र खण्डन करें ।।५६।।

**नीत्वाश्वान् सप्त कक्षा इव नियमवशं वेत्रकल्पप्रतोद-**
**स्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि ।**
**पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन् दर्शयंस्त्रायतां व-**
**स्त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्राक्प्रतीहारपालः ।।५७।।**

**अन्वयः**—तूर्णं ध्वान्तस्य राशौ इतरजने इव पूर्वम् उत्सारिते, दूरभाजि, रथस्य प्रष्ठः, वेत्रकल्पप्रतोदः, त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्रतीहारपालः, सप्त कक्षाः अश्वान् इव प्राक् नियमवशं नीत्वा, क्षितिभृदधिपतीन् दर्शयन् वः त्रायताम् ।

**व्याख्या**—तूर्णं शीघ्रं ध्वान्तस्य अन्धकारस्य राशौ समूहे इतरजने इव पूर्वम् आदौ उत्सारिते निवारिते, दूरभाजि दूरं गते सति, रथस्य प्रष्ठः पुरः स्थितः वेत्रकल्पप्रतोदः, वेत्रात् ईषदूनः वेत्रकल्पः, ईषदसमाप्तौ कल्पब्देश्यदेशीयरः इति कल्पप्, वेत्रकल्पः प्रतोदः कविका यस्य तथाभूतः, त्रैलोक्यस्य, त्रयाणां लोकानां समाहारः त्रिलोकी, तस्या भावः त्रैलोक्यम्, चतुर्वर्णादीनामिति स्वार्थे ष्यञ्, आस्थानदानाय अवस्थानप्रदानाय दानाय च उद्यतस्य दिवसपतेः सूर्यस्य प्रतीहारपालः द्वारपालः, सप्तकक्षाः सप्तप्रकोष्ठान् इव सप्त अश्वान् नियमवशं नीत्वा नियन्त्र्य, क्षितिमृदधिपतीन् मुख्यान् राज्ञः, बृहतः पर्वतांश्च प्राक् दर्शयन् स्थितः । यथा कश्चन द्वारपालः मुख्यान् नृपान् उपवेशनार्थं गृहान् दर्शयति तथा अरुणोऽपि बृहतः पर्वतान् आदौ दर्शयतीत्यर्थः, सः अरुणः वः युष्मान् त्रायताम् रक्षतु । आदौ बृहत् पर्वतेषु किरणपात इति भावः । उपमालङ्कारः ।

**भावार्थः**—यथा कस्यचित् सम्राजः वेत्रहस्तो द्वारपालः इतरलोकान् अपसार्य मुख्यान् भूपान् उपवेशनार्थं नियन्त्रिताः शालाः दर्शयति, तथा त्रिभुवनस्य आस्थानदानव्रतिनः सूर्यस्य वेत्रतुल्यकविकाधारी रथद्वारस्थः अरुणः अन्धकारमपसार्य सप्त अश्वान् नियन्त्र्य आदौ वृहतः पर्वतान् दर्शयति । सः अरुणः युष्मान् रक्षतु ।

As a chief guide of an emperor holding a cane remains at the entrance of seven halls (of the palace), drives other people away and guides the rulers to their seats in the halls, so Aruṇa, the charioteer of the Sun, who remains busy in providing sustenance to three worlds, sitting in front of the chariot with cane-like reins in his hand, drives away the darkness, controls the seven horses, and shows first the great mountains. May that Aruṇa save you all.57

दूसरे लोगोंके समान अन्धकारको अपसारित कर रथके सम्मुख भागमें स्थित, वेत्रतुल्य लगाम हाथमें पकड़ने वाले, तीन भुवनको आस्थान और दान देनेकेलिए तत्पर

सूर्यके (सम्राटके) प्रतिहार, सात शालाओंकी भाँति, सात अश्वोंको नियन्त्रित कर बड़े बड़े महीभृतोंको (राजा और पर्वतों को) पहले दिखानेवाले अरुण आप लोगोंकी रक्षा करें ।।५७।।

**वज्रिञ्जातं विकासीक्षणकमलवनं भासि नाभासि वह्ने**
**तातं नत्वाश्वपार्श्वान्नय यम महिषं राक्षसा वीक्षिताः स्थ ।**
**सप्तीन् सिञ्च प्रचेतः पवन भज जवं वित्तपावेदितस्त्वं**
**वन्दे शर्वेति जल्पन् प्रतिदिशमधिपान् पातु पूष्णोऽग्रणी वः ।।५८।।**

**अन्वयः**–वज्रिन् ईक्षणकमलवनं विकासि जातम्, वह्ने भासि न आभासि, यम तातं नत्वा महिषम् अश्वपार्श्वात् नय, राक्षसा: वीक्षिता: स्थ, प्रचेत: सप्तीन् सिञ्च, पवन जवं भज, वित्तप त्वम् आवेदित:, शर्व वन्दे इति प्रतिदिशम् अधिपान् जल्पन् पूष्ण: अग्रणी: व: पातु ।

**व्याख्या**–वज्रमस्यास्तीति वज्री, तत्सम्बुद्धौ वज्रिन् हे इन्द्र, तव ईक्षणकमलवनं नेत्रपद्मवनं विकासि जातं विकसितम्, हे वह्ने, भासि (सूर्यस्य) रुचि प्रसृतायां न आभासि न दीप्यसे। हे यम, तातं पितरं सूर्यं नत्वा महिषं तव वाहनम् अश्वपार्श्वात् नय अपसारय, यत: अश्वमहिषं परस्परविरोधि, हे राक्षसा; यूयं वीक्षिता: दृष्टा: स्थ, सावधाना भवत । हे प्रचेत: वरुण, सप्तीन् अश्वान् सिञ्च, त्वं जलाधिप: असि, सेचनेन अश्वा: सुस्था व्रजेयु:। हे पवन, जवं भज शीघ्रगामी भव, अनुकूलवातेन अश्वा: सुखं यास्यन्ति, तेषां श्रान्तिश्च अपैष्यति । हे वित्तप कुवेर । त्वम् आवेदित: ज्ञापित:, त्वं शङ्खपद्मादीनां निधीनां रक्षणे अवहितो भव । हे शर्व, शिव, त्वां वन्दे । अष्टमूर्तिधरस्त्वमपि सूर्यरूपोऽसि । इति प्रतिदिशम् अधिपान् दिगीशान् जल्पन् कथयन् पूष्ण: सूर्यस्य अग्रणी: अग्रगामी अरुण: व: युष्मान् पातु रक्षतु ।

**भावार्थः**–हे इन्द्र तव नयनपद्मवनं विकसितम्, अग्ने, प्रसृते सूर्यकिरणे न दीप्यसे, यम, पितरं सूर्यं नमस्कृत्य महिषम् अश्वपार्श्वात् नय, यतो महिष: अश्वविरोधी, हे राक्षसा:, यूयं विलोकिता:; हे वरुण, जलाधिपोऽसि, अश्वान् सिञ्च; हे पवन अनुकूल: सन् शीघ्रं वह, हे धनपते कुवेर, त्वं ज्ञापित:, निधिसंरक्षणे अवहितो भव; हे अष्टमूर्तिधर शिव, त्वां वन्दे, इत्थम् अष्ट दिक्पालान् कथयन् यियासु: सूर्यसारथि: अरुण: युष्मान् पातु ।

The precursor of the Sun says, "O Indra, your eyes are wide open like lotuses, O fire, you do not look bright any more after rising of the Sun, O Yama, pay obeisance to your father, and drive the buffalo away from the horses, O Rākṣasas, you are

closely watched, O Pracetas, sprinklc water on horses, O Pavana, enhance your speed; O vittapa (Kubera) your cases have been reported, O Śiva, I bow down before you". May he who talks thus to the guardians of each quarter of the sky, protect you.58

हे इन्द्र तुम्हारे आँख कमल विकसित हो गए हैं; हे अग्नि प्रभुके (सूर्यके) किरणोंसे तुम्हारी कान्ति दृश्य नहीं होती है; हे यम पिताजीको प्रणाम करके महिषको अश्वोंके सामनेसे ले जाओ; हे राक्षसों तुम सबको स्वामी देखलिए; हे वरुण अश्वोंको सिक्त करो; हे पवन शीघ्रगामी हो; हे धनपति कुवेर तुमको हम बोल दिये हैं (रक्षणमें सावधान हो); हे शिव मैं प्रणाम करता हूँ; ऐसे सब दिक्पालोंको कहनेवाले सूर्यसारथि (अरुण) आप लोगोंकी रक्षा करें ॥५८॥

**पाशानाशान्तपालादरुण वरुणतो मा ग्रहीः प्रग्रहार्थं**
**तृष्णां कृष्णस्य चक्रे जहिहि नहि रथो याति मे नैकचक्रः ।**
**योक्तुं युग्यं किमुच्चैःश्रवसमभिलषस्यष्टमं वृत्रशत्रो-**
**स्त्यक्तान्यापेक्ष विश्वोपकृति रिति रविः शास्ति यं सोऽवताद्वः ॥५९॥**

**अन्वयः**—हे अरुण आशान्तपालात् वरुणतः पाशान् प्रग्रहार्थ मा ग्रहीः । कृष्णस्य चक्रे तृष्णां जहिहि, मे रथः नैकचक्रः नहि याति, वृत्रशत्रोः युग्यम् उच्चैःश्रवसम् अष्टमं योक्तुम् अभिलषसि किम् ? त्यक्तान्यापेक्षविश्वोपकृतिः रविः इति यं शास्ति सः वः अवतात् ।

**व्याख्या**—हे अरुण । आशान्तपालात् पश्चिमदिक्पालात् वरुणतः पञ्चम्यास्तसिल् पाशान् प्रग्रहार्थ रश्मिनिमित्तं मा ग्रहीः न गृहाण, न माङ्योगे इति अडभावः, कृष्णस्य चक्रे सुदर्शने तृष्णाम् अभिलाषं जहिहि त्यज, मे रथः नैकचक्रः बहुचक्रः नहि याति, एकेनैव चक्रेण चलति, वृत्रशत्रोः इन्द्रस्य युग्यं, युगं रथाङ्गं वहतीति युग्यः अश्वः तद्वहतिरथयुगप्रासङ्गम् इति यत्, तम् उच्चैःश्रवसम् अष्टमाश्वरूपेण योक्तुम् अभिलषसि किम् ? नैतद् युक्तम्, इति इत्थं त्यक्तान्यापेक्षविश्वोपकृतिः, अन्यस्य अपेक्षा अन्यापेक्षा, विश्वस्य उपकृतिः विश्वोपकृतिः, त्यक्ता अन्यापेक्षा विश्वोपकृतिः येन सः, अन्यान् अनपेक्ष्य विश्वस्य उपकारं चिकीर्षुः रविः सूर्यः इति पूर्वोक्तप्रकारेण यं शास्ति उपदिशति, सः अरुणः युष्मान् अवतात् रक्षतु । अनुप्रासोऽलङ्कारः ।

**भावार्थः**—श्लोकेऽस्मिन् रविः अरुणम् उपदिशति—हे अरुण, प्रग्रहार्थं वरुणतः पाशान् न नय, स्वप्रग्रहं व्यवहर । कृष्णस्य चक्रे तृष्णां त्यज, मम रथः एकेन एव चक्रेण चलति, इन्द्रस्य उच्चैःश्रवसम् अश्वम् अष्टमाश्वरूपेण ग्रहीतुम् अभिलषसि किमु ?

सप्तभिरेव अश्वै: मे रथश्चलति, अष्टमो नावश्यक: । एवं प्रकारेण कस्यचित् अपरस्य साहाय्य मनपेक्ष्य विश्वस्य उपकारं चिकीर्षु: रवि: यम् अरुणम् उपदिशति, स: अरुण: युष्मान् अवतात् ।

The Sun who does not depend on other for the welfare of the world, says-"O Aruṇa do not accept the noose from Varuṇa to use it as rein, do not hanker after the wheel of Kṛṣṇa, as my chariot does not need more wheels, do not aspire for the horse Ucchaihśravas of Indra (the killer of Vṛtra) to yoke as eighth one". May that Aruṇa protect you.59

हे अरुण । दिक्पाल वरुणसे पाशको लगामकेलिए मत लो, कृष्णके चक्र लानेमें आशा मत रखो, क्योंकि यह मेरा रथ अनेक चक्रसे नहीं चलता है । इन्द्रके अश्व उच्चै: श्रवाको अष्टम अश्व बनाना चाहते हो क्या ? (यह ठीक नहीं) दूसरोंकी सहायता बिना विश्वके उपकार करनेमें तत्पर सूर्य इस तरह जिसको उपदेश देते हैं, वह अरुण आप लोगोंकी रक्षा करें ॥५९॥

**नोमूर्च्छाछिन्नवाञ्छः श्रमविवशवपुर्नैव नाप्यास्यशोषी**
**पान्थः पथ्येतराणि क्षपयतु भवतां भास्वतोऽग्रेसरः सः ।**
**यः संश्रित्य त्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखै-**
**रारादारामलेखामिवहरितमणिश्यामलामश्वपङ्क्तिम् ॥६०॥**

**अन्वय:**–पटुतरै: मयूखै: ताप्यमान: य: आरात् आरामलेखामिव हरितमणिश्यामलाम् अश्वपङ्क्तिं संश्रित्य त्रिलोकीम् अटति, नोमूर्च्छाछिन्नवाञ्छ:, नैवश्रमविवशवपु:, नापि आस्यशोषी, भास्वत: अग्रेसर: स पान्थ: भवतां पथ्येतराणि क्षपयतु ।

**व्याख्या**–पटुतरै: तीव्रै: मयूखै: किरणै: ताप्यमान: सन्तप्त: य: अरुण: आरात् समीपे, आराद्दूरसमीपयो: इत्यमर:, आरामलेखाम् इव उपवनवृक्षश्रेणीमिव, हरितमणिश्यामलां हरितमणिरिव मरकतमणिरिव श्यामलां श्यामवर्णाम्, उपमानानि सामान्यवचनै: इति समास:, अश्वपङ्क्तिम् अश्वश्रेणीं संश्रित्य आश्रित्य, त्रिलोकीं त्रयाणां लोकानां समाहार: त्रिलोकी, अदन्तादिद्वगु: स्त्रियामिष्ट:, त्रिभुवनम् अटति भ्रमति, नो मूर्च्छाछिन्नवाञ्छ:, छिन्ना वाञ्छा यस्य स: छिन्नवाञ्छ:, मूर्च्छया छिन्नवाञ्छ: नो भवतीति नोमूर्च्छाछिन्नवाञ्छ:, मोहात् अत्यक्तजगद्भ्रमणाकांक्ष:, नैव श्रमविवशवपु:, श्रमेण विवशं क्लान्तं वपु: शरीरं यस्य स:, नापि आस्यशोषी आस्ये वदने शोष: शुष्कता अस्यास्तीति आस्यशोषी भवति । भास्वत: सूर्यस्य अग्रेसर: अग्रगामी स: पान्थ: अरुण: भवतां पथ्येतराणि अमङ्गलानि क्षपयतु नाशयतु । विशेषोक्तिरलङ्कार: ।

**भावार्थः**—तीव्रातपतप्तः यः अरुणः समीपस्थाम् उपवनवृक्षपङ्क्तिमिव मरकतमणि वर्णाम् अश्वपङ्क्तिम् आश्रित्य त्रिभुवनं परिभ्रमति, सूर्यसन्निकर्षात् तापं प्राप्यापि जगद्भ्रमण-रूपं लक्ष्यं न त्यजति, न श्रान्तिं, नापि मुखे शुष्कताम् अनुभवति, सूर्यस्य अग्रगामी सः अरुणः भवताम् अमङ्गलं नाशयतु ।

As a traveller, afflicted with scorching heat, takes rest under a shady tree of a garden and then proceeds further, so Aruṇa sitting ahead of the Sun takes resort to the horses of green emerald colour, resembling a range of trees and does not feel tired or thirsty. Without deviating from his goal he moves across the three worlds. May that Aruṇa the fore-runner of the Sun, destroy all your evils.60

कड़ी धूपसे तपता हुआ जो अरुण पासवाले वनके सीमा वृक्षोंकी भाँति, नीलमणि सदृश वर्णवाले अश्वोंका आश्रय कर तीन भुवन भ्रमण करते हैं, भ्रमसे भी अपने लक्ष्यसे विच्युत नहीं होते, फिर श्रमसे क्लान्त या शुष्कमुख नहीं होते, वह सूर्यके आगे चलनेवाले अरुण आप लोगोंके अमङ्गल नाश करें ॥६०॥

**सीदन्तोऽन्तर्निमज्जज्जडखुरमुसलाः सैकते नाकनद्याः**
**स्कन्दन्तः कन्दरुलीः कनकशिखरिणो मेखलासु स्खलन्तः ।**
**दूरं दूर्वास्थलोत्का मरकतदृषदि स्थास्नवो यन्न याताः**
**पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्हुंकृतेनाग्रगो वः ॥६१॥**

**इति अरुणवर्णनम्**

**अन्वयः**—नाकनद्याः सैकते अन्तर्निमज्जज्जडखुरमुसलाः सीदन्तः, कनकशिखरिणः कन्दरालीः स्कन्दन्तः, मेखलासु स्खलन्तः, दूरं दूर्वास्थलोत्काः, मरकतदृष्पदि स्थास्नवः, पूष्णः अश्वाः यत् न याताः, तत् हुंकृतेन जवनैः तैः पूरयन् अग्रगः वः अवतु ।

**व्याख्या**—नाकनद्याः स्वर्णद्याः सैकते वालुकासु अन्तः अभ्यन्तरं निमज्जन्तः निमग्नाः जडाः खुराः मुसला इव येषां ते, अतएव सीदन्तः अवसन्नाः, कनकशिखरिणः हेमाद्रेः कन्दरालीः गुहापङ्क्तीः स्कन्दन्तः लंघयन्तः, मेखलासु कटिप्रदेशेषु स्खलन्तः, दूरम् अत्यर्थं दूर्वास्थलाय उत्काः उत्कण्ठिताः, शस्पधिया मरकतदृषदि मरकतशिलायां स्थास्नवः स्थिराः, पूष्णः रवेः अश्वाः यत् यत्परिमितं वर्त्म न याताः, तत् तावद्वर्त्म हुंकृतेन जवनैः त्वरमाणैः तैः अश्वैः पूरयन्, अग्रगः अग्रणीः अरुणः वः युष्मान् अवतु रक्षतु ।

**भावार्थः**—स्वर्गङ्गायाः वालुकासु मज्जत्खुराः, सुमेरोः कन्दराः लंघयन्तः, तस्य च मध्यप्रदेशे स्खलन्तः, मरकतशिलायां दूर्वादल भ्रान्त्या अप्रचलन्तः, सूर्यस्य अश्वाः यावन्मार्ग न याताः, तावदेव हुंकृतेन त्वरमाणैः अश्वैः पूरयन् अरुणः युष्मान् रक्षतु ।

The horses of Pūṣan (The Sun) are disgusted as their hoofs get buried in the sands of svargaṅgā. They jump over the caves, slip off the slopes on golden peaks of Sumeru. As they do not move ahead on the emerald plains, mistaking as grassy field, Aruṇa hastens them with huṁkāra to make up the path. May that Aruṇa save you all.61

स्वर्गङ्गाके वालुकामें खुरोंके धँस जानेसे शिथिल, हेमाद्रिके कन्दराओंको लम्फसे उतर कर कटिदेशमें ठोकर खा जानेवाले और दूरसे दूर्वा भ्रमसे मरकतमणिमय स्थलमें ठहर जानेवाले अश्वोंको हुंकारसे त्वरान्वित कर अवशिष्ट राहको पूरण करने वाले, रथके सामने बैठे हुए अरुण आप लोगोंकी रक्षा करें ॥६१॥

## अथ रथवर्णनम्

**पीनोरःप्रेरिताभ्रैश्चरमखुरपुटाग्रस्थितैः प्रातरद्रा-**
**वादीर्घाङ्गै रुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः ।**
**उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणामः**
**प्राह्णे श्रेयो विधत्तां सवितुरवतरन् व्योमवीथीं रथो वः ॥६२॥**

**अन्वयः**—प्रातः अद्रौ पीनोरःप्रेरिताभ्रैः, चरमखुरपुटाग्रस्थितैः आदीर्घाङ्गैः हरिभिः उदस्तः, अपगतासङ्गनिःशब्दचक्रः उत्तानानूरुमूर्धावनतिहठभवद्विप्रतीपप्रणामः, प्राह्णे व्योम-वीथीम् अवतरन्, सवितुः रथः वः श्रेयः विधत्ताम् ।

**व्याख्या**—प्रातः प्रभाते अद्रौ पर्वते मेरौ पीनोरःप्रेरिताभ्रैः, पीनं पृथुलं यत् उरः वक्षः तेन प्रेरितानि अभ्राणि मेघाः यैः तैः, चरमखुरपुटाग्रस्थितैः, चरमं खुरपुटं तस्य अग्रे स्थितैः, आदीर्घाङ्गैः, आ समन्तात् दीर्घाणि अङ्गानि येषां तैः, हरिभिः अश्वैः उदस्तः ऊर्ध्वं नीतः ऊर्ध्वमुखः इत्यर्थः, अपगतासङ्गनिःशब्दचक्रः, अपगतः यः आसङ्गः भूमिसम्पर्कः, तेन निःशब्दं चक्रं यस्य सः, उत्तानः ऊर्ध्वमुखः यः अनूरुः तस्य यः मूर्धा मस्तकं तस्य अवनत्या अवनमनेन हठेन बलात् भवन् सम्पन्नः विप्रतीपप्रणामः विपरीत-प्रणतिः यस्मिन् सः, पाह्णे पूर्वाह्णे व्योमवीथीम् आकाशमार्गम् अवतरन् सवितुः सूर्यस्य रथः वः युष्माकं श्रेयः मङ्गलं विधत्तां विदधातु ।

**भावार्थः**—प्रातः मेरुपर्वतोपरि मेघान् अपसार्य अग्रखुरान् उत्तोल्य धावद्भिः दीर्घकायैः अश्वैः ऊर्ध्वमुखीकृतः, भूमिसम्पर्कराहित्यात् निःशब्दचक्रः, अनूरुमुखस्य

पश्चात् अवनत्या बलात् वैपरीत्येन सम्पादितप्रणामः, पूर्वाह्ने आकाशपथम् अवतरन् सवितुः रथः युष्माकं मङ्गलं करोतु ।

The horses stand on the tips of hoofs of hind legs, lengthen their bodies, push forward the clouds with their robust breasts and draw the chariot upwards in the early morning resulting in the reverse Praṇāma of Anūru with head bending backwards. The Chariot did not produce then any sound due to non-contact with land. That Chariot of the Sun, coming back to normal position in the path of the sky in forenoon, may Bless you with good fortune.62

प्रभातमें पृथुल वक्षस्थलसे मेघोंको ढकेल कर जानेवाले और खुरोंके अग्रभाग पर दौड़नेसे दीर्घाङ्ग अश्वोंके द्वारा ऊर्द्धमुख, भूमि पर चक्र न लगनेसे निःशब्द, रथमें बैठे हुए अनुरूको पीछेसे झुके हुए सिरसे विलोम प्रणाम कराने वाला, सबेरे आकाश मार्गमें अवतीर्ण सूर्यके रथ आप लोगोंके मङ्गल विधान करें ॥६२॥

**ध्वान्तौघध्वंसदीक्षाविधिपटु वहता प्राक् सहस्रं कराणा-**
**मर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।**
**स श्रान्तानां नितान्तं भरमिव मरुतामक्षमाणां विसोढुं**
**स्कन्धात् स्कन्धं व्रजन् वो वृजिनविजितये भास्वतः स्यन्दनोऽस्तु ॥६३॥**

**अन्वयः**—प्राक् ध्वान्तौघध्वंसदीक्षाविधिपटु, कराणां सहस्रं वहता अर्यम्णा अध्यासनेन यः गरिम्णः अतुलं पदम् उपानीयत, नितान्तं भरं विसोढुम् अक्षमाणाम् श्रान्तानाम् इव मरुतां स्कन्धात् स्कन्धं व्रजन् सः भास्वतः स्पन्दनः वः वृजिनविजितये अस्तु ।

**व्याख्या**—प्राक् आदौ ध्वान्तौघस्य अन्धकारसमूहस्य ध्वंसदीक्षाविधौ विध्वंसन-कर्मणि पटु समर्थं, कराणां किरणानां सहस्रं वहता धारयता, अर्यम्णा सूर्येण कर्त्रा, अध्यासनेन उपवेशनेन यः गरिम्णः गौरवस्य अतुलं पदं स्थानम् उपानीयत प्राप्यत, नितान्तं भरं भारं वोढुम् सोढुम् अक्षमाणाम् असमर्थानाम् श्रान्तानाम् इव मरुतां स्कन्धात् स्कन्धं एकस्मात् स्तरात् स्तरान्तरं व्रजन् गच्छन् सः भास्वतः सूर्यस्य स्यन्दनः रथः वः युष्माकं वृजिनविजितये वृजिनस्य विजितिः, तस्यै, पापविनाशाय अस्तु भवतु । अनुप्रासोत्प्रेक्षयोः परस्परनैरपेक्षेण संसृष्टिः, समासोक्तिश्च ।

**भावार्थः**—आदौ अन्धकारापनयनसमर्थं करसहस्रं (किरणनिकरं) धारयतः सूर्यस्य उपवेशनेन गुरुः (गौरवान्वितः) अतिभारं वोढुम् असमर्थानां, श्रान्तानामिव वहतां वायूनां

स्कन्धात् स्कन्धान्तरं (स्तरात् स्तरान्तरं) व्रजन् सूर्यस्य रथः युष्माकं पापं नाशयतु ।

The Chariot, glorified and made heavier by the sitting of the thousand-rayed Sun, who is expert in demolishing the darkness, changes its course from one sphere of Maruts to another as if they were tired and unable to carry the load. May that Chariot remove all your vices.63

पहले अन्धकारके विनाश करनेमें समर्थ सहस्रांशु सूर्यके बैठनेसे जो महान् गौरवको प्राप्त होता है, बहुत ओजनको सहन करनेमें असमर्थ श्रान्त वायुके एक स्कन्धसे दूसरे स्कन्धमें जाने वाला वह सूर्यरथ आप लोगोंके पाप क्षय करें ॥६३॥

**योक्त्रीभूतान् युगस्य ग्रसितुमिव पुरो दन्दशूकान् दधानो**
**द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभः ।**
**सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनः**
**क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाविधेयप्रचारः ।।६४।।**

**अन्वयः**—पुरः युगस्य योक्त्रीभूतान् दन्दशूकान् ग्रसितुम् इव दधानः, द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभः, निरतिशयरयप्रीणितानूरुः, हरीच्छाविधेयप्रचारः गरुत्मान् इव असौ सावित्रः स्यन्दनः वः एनः क्षेपीयः हरतु ।

**व्याख्या**—पुरः अग्रतः युगस्य रथाङ्गविशेषस्य योक्त्रीभूतान् योक्तृभावं प्रपन्नान् दन्दशूकान् सर्पान् ग्रसितुं खादितुम् इव दधानः धारयन्, द्वेधाव्यस्ता द्विभागेन विभक्ता अम्बुवाहावलिः मेघपङ्क्तिः एव विहितौ बृहत्पक्षौ तयोः विक्षेपेण शोभा यस्य तथाभूतः, निरतिशयः यो रयः वेगः तेन प्रीणितः अनूरुः येन सः, हरेः विष्णोः सूर्यस्य च इच्छाविधेयः इच्छाधीनः प्रचारः गतिः यस्य सः, गरुत्मान् इव गरुडः इव असौ सावित्रः सौरः स्यन्दनः रथः वः युष्माकम् एनः पापं क्षेपीयः अतिशयेन क्षिप्रं क्षेपीयः, स्थूलदूर इत्यादिना सिद्धम्, क्षिप्रतरं हरतु नाशयतु । उत्प्रेक्षोपमयोः संसृष्टिः ।

**भावार्थः**—गरुडः यथा सर्पान् भक्षयितुं धारयति, सौरः रथः तथा युगसम्बद्धानि सर्पतुल्यानि योत्राणि धारयति, रथधावनावसरे द्वेधा विभक्ताः मेघाः गरुडतुल्यस्य रथस्य पक्षतुल्याः दृश्यन्ते । गरुडः, रथश्च उभौ शीघ्रगत्या विष्णुम् अनूरुंच प्रीणयतः । गरुडः हरे रिव रथोऽपि हरेः सूर्यस्य इच्छानुसारं याति । अतएव गरुडसदृशः सूर्यस्य रथः युष्माकं पापं शीघ्रं विनाशयतु ।

The Solar chariot like Garuḍa pleases Anūru with its high speed, looks beautiful while passing through big clouds, floating in both sides like two wings, carries yokes fastened with

ropes looking like snakes in its front as if to devour them, and moves according to the desires of Hari. May that Chariot destroy all your sins immediately.64

आगे जुआमें लगे हुए चमड़ेको सर्प भावनासे खानेकेलिए मानो धारण करने वाला, जानेके समय दो भागमें विभक्त मेघ रूपी बड़े पक्षोंको फैलानेकी शोभा धारण करने वाला, अनूरुको अपने वेगसे खुश कराने वाला, हरि (विष्णु, सूर्य)की इच्छानुसार जाने वाला गरुड़के समान सूर्यरथ आप लोगोंके पाप शीघ्र नाश करें ॥६४॥

**एकाहेनैव दीर्घां त्रिभुवनपदवीं लङ्घयन् यो लघिष्ठः**
**पृष्ठे मेरोर्गरीयान् दलितमणिदृषत्त्वींषि पिंषन् शिरांसि ।**
**सर्वस्यैवोपरिष्ठादथ च पुनरधस्तादिवास्ताद्रिमूर्ध्नि**
**ब्रध्नस्याव्यात्स एवं दुरधिगमपरिस्पन्दनः स्यन्दनो वः ।।६५।।**

**अन्वयः**—यः एकाहेन एव दीर्घां त्रिभुवनपदवीं लङ्घयन् लघिष्ठः, मेरोः पृष्ठे दलितमणिदृषत्त्वींषि शिरांसि पिंषन् गरीयान्, सर्वस्य एव उपरिष्ठात्, अथ च पुनः अस्ताद्रि मूर्ध्नि अधस्तात् इव, एवं दुरधिगमपरिस्पन्दनः सः ब्रध्नस्य स्यन्दनः वः अव्यात् ।

**व्याख्या**—यः रथः एकम् अहः एकाहः तेन एकेनैव दिवसेन, राजाह इत्यादिना टचि टिलोपः, दीर्घा त्रिभुवनपदवीं त्रयाणां भुवनानां समाहारः त्रिभुवनं, तस्य पदवीं मार्गं लङ्घयन् लघिष्ठः (क्षेपिष्ठः), मेरोः पृष्ठे दलितमणिदृषत्त्वींषि दलिताः याः मणिदृषदः मणिशिला; तासां त्विट् येषु तानि शिरांसि शिखराणि पिंषन् चूर्णयन् गरीयान्, ईयसुनि, प्रियस्थिर इत्यादिना गुरो र्गरादेशः, सर्वस्य उपरिष्ठात् ऊर्ध्वं विद्यमानः, अथच पुनः अस्ताद्रिमूर्ध्नि अस्ताचलस्य शिरोदेशे अधस्तात् इव नीचैः दृश्यमानः, एवं दुरधिगमं दुर्विज्ञेयं परिस्पन्दनं व्यापारः यस्य तथाभूतः, सः ब्रध्नस्य सूर्यस्य, भास्कराहस्कर ब्रध्नप्रभाकरविभाकराः इत्यमरः, स्यन्दनः रथः वः युष्मान् अव्यात् रक्षतु । लघिष्ठोऽपि गरीयान्, उपरिस्थितोऽपि अधःस्थः इति विरोधः, दुरधिगमव्यापारत्वात् तत्परिहारः ।

**भावार्थः**—सूर्यस्य रथः अतीव क्षिप्रगामी, यतः एकेनैव दिवसेन त्रिभुवनं परिक्रामति । मेरोः मणिशिलाभिः दीप्यमानानि शिखराणि पिनष्टि, अतः सोऽपि गरीयान् । पुनश्च सर्वस्य उपरिष्ठात् व्रजन्नपि अस्ताद्रिशिखरे अधोदृष्टः भवति, एवं दुरधिगमव्यापारः असौ रथः युष्मान् रक्षतु ।

The Chariot of the Sun is the lightest, for it covers the long path of the three worlds in a day. It is heavier also as it pounds

to dust the peaks shining with particles of gem-stones on the surface of Meru. It remains above all, but is seen below the peak of Aṣṭādri. Thus, the Chariot whose movement is beyond comprehension may protect you.65

एक दिनमें दीर्घ त्रिभुवन मार्गको लंघन करनेसे जो लघिष्ठ हैं; मेरुके पृष्ठमें मणिशिलाओंकी कान्तिसे शोभित शिरकी भाँति शिखरोंको दलित करनेसे गरीयान्; सबके ऊपर होनेसे भी अस्ताद्रिशिखरके नीचे भी चलनेवालेकी तरह, अचिन्त्य गतिवाला वह सूर्यरथ आप लोगोंकी रक्षा करें ॥६५॥

**धूर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरा**
**द्राहौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि ।**
**श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं**
**देयासुर्वो दवीयोदिवि दिवसपतेः स्यन्दनप्रस्थितानि ॥६६॥**

**अन्वयः**—धूर्ध्वस्ताग्र्यग्रहाणि, ध्वजपटपवनान्दोलितेन्दूनि, ग्रासाभिलाषात् राहौ दूरात् अनुसरति, पुनः दत्तचक्रव्यथानि, श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि, दवीयोदिवि, दिवसपतेः स्यन्दनप्रस्थितानि वः भद्रं देयासुः ।

**व्याख्या**—धुरा यानस्यपुरोभागेन, ध्वस्ताः दलिताः अग्र्यग्रहाः मङ्गलादयः यैः तानि, ध्वजपटस्य पताकायाः पवनेन आन्दोलितः विकम्पितः इन्दुः चन्द्रः यैः तानि, ग्रासाभिलाषात् ग्रासेच्छया राहौ दूरात् अनुसरति अनुधावति, भावे सप्तमी, पुनः दत्ता चक्रेण व्यथा यैः तानि, श्रान्तानां क्लान्तानाम् अश्वानां श्वासेन हेलया धुतानि कम्पितानि विबुधधुन्याः स्वर्गङ्गायाः निर्झराम्भांसि प्रवाहजलानि यैः तानि, दवीयोदिवि दूरतरे व्योम्नि, दूर शब्दात् ईयसुनि, स्थूल दूर इत्यादिना सिध्यति । दिवसपतेः सूर्यस्य स्यन्दन-प्रस्थितानि रथप्रसरणानि, सापेक्षत्वेऽपि गमकत्वात् समासः, वः युष्माकं भद्रं मङ्गलं देयासुः विदधतु ।

**भावार्थः**—यदा सूर्यस्य रथः धुरा पुरोवर्तिनो ग्रहान् मङ्गलादीन् दलन् अग्रेऽसरत्, तदा रथध्वजस्य पवनेन चन्द्रः आन्दोलितोऽभूत्; राहौ सूर्यं ग्रसितुं धावति, रथस्य चक्रेण पुनरपि तस्य व्यथा अजायत, श्रान्ताना मश्वानां श्वासेन स्वर्गङ्गायाः प्रवाहः अकम्पत, दूरतरे व्योम्नि गच्छतः रवेः रथस्य ईदृक् गतिः युष्माकं मङ्गलं विदधातु ।

The movement of the Chariot of the lord of the day destroys the planets coming to the front, with the shaft. It swings the moon with the wind of the banner, inflicts pain with wheel on Rāhu who pursues with the intention of swallowing and stirs

the water of the heavenly river with heavy sighs of tired horses. May that Chariot moving far above in the sky give you happiness.66

अपने पुरोभागसे सम्मुख पतित ग्रहोंको मचलते हुए, रथके पताका वायुसे चन्द्रको कम्पित करने वाले, खानेकेलिए दूरसे दौड़नेवाले राहुको फिर चक्रव्यथा देनेवाले और थके हुए अश्वोंके साँससे स्वर्गङ्गाके जलको कम्पित कर दूर आकाशमें जानेवाले सूर्य रथके प्रस्थान आप लोगोंके मङ्गल विधान करें ॥६६॥

**अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रं**
**धूःस्तम्भे दग्धधूपाः प्रहितसुमनसो गोचरे कूवरस्य ।**
**चर्चाश्चक्रे चरन्त्यो मलयजपयसा सिद्धवध्वस्त्रिसन्ध्यं**
**वन्दन्ते यं द्युमार्गे स नुदतु दुरितान्यंशुमत्स्यन्दनो वः ॥६७॥**

**अन्वयः**—अक्षे रक्षां निबध्य प्रतिसरवलयैः युगाग्रं योजयन्त्यः, धूस्तम्भे दग्धधूपाः, कूवरस्य गोचरे प्रहितसुमनसः, चक्रे मलयजपयसा चर्चाः चरन्त्यः, सिद्धवध्वः त्रिसन्ध्यं यं द्युमार्गे वन्दन्ते, सः अंशुमत्स्यन्दनः वः दुरितानि नुदतु ।

**व्याख्या**—अक्षे रथावयवविशेषे रक्षां मङ्गलवस्त्रं निवध्य संयोज्य प्रतिसरवलयैः कौतुकसूत्रकङ्कणैः युगाग्रं युगस्य रथाङ्गविशेषस्य अग्रं योजयन्त्यः, धूः स्तम्भे दग्धः धूपःयाभिः ताः, कूवरस्य युगन्धरस्य गोचरे धारणस्थाने प्रहिताः दत्ताः सुमनसः पुष्पाणि याभिः ताः, स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् इत्यमरः । चक्रे मलयजपयसा चन्दनजलेन चर्चाः विलेपनानि चरन्त्यः कुर्वन्त्यः सिद्धवध्वः सिद्धाङ्गनाः त्रिसन्ध्यं त्रिकालं यं रथं द्युमार्गे दिवः स्वर्गस्य मार्गे वन्दन्ते पूजयन्ति, सः अंशुमत्स्यन्दनः सूर्यरथः वः युष्माकं दुरितानि पापानि नुदतु नाशयतु ।

**भावार्थः**—स्वर्गमार्गे सिद्धाङ्गनाः यस्य रथस्य अक्षे मङ्गलवस्त्रं निवध्य, धूःस्तम्भे धूपं दत्त्वा, युगाग्रं कौतुकसूत्रकङ्कणैः संयोज्य, युगन्धरं पुष्पादिभिः मण्डयित्वा, चक्रं च चन्दनजलेन अभिषिच्य त्रिसन्ध्यं वन्दन्ते, सः सूर्यरथः युष्माकं पापं खण्डयतु ।

The ladies of Siddhas worship the Chariot thrice in trisandhyā. They tie the protection strings on the axle, attach ribbons to the front portion of the yoke, offer incense in dhūstambha (Shaft), put flowers on the base, of the yoke, and sprinkle the wheel with sandal-paste. May that Chariot of the Sun ward off all your worries.67

रथके अक्षमें रक्षासूत्र बाँधकर, मङ्गलसूत्रसे जुआके अग्र भाग युक्त कर, धू स्तम्भमें धूप देकर, कूवरमें फूल चढ़ाकर और चन्दन जलसे चक्रका अभिषेक कर सिद्धाङ्गनाएँ आकाश मार्गमें तीन सन्ध्याओंमें जिस रथके पूजा करती हैं, वह सूर्यरथ आप लोगोंके पाप खण्डन करें ॥६७॥

**उत्कीर्णस्वर्णरेणुर्द्रुतखुरदलिता पार्श्वयोः शश्वदश्वै-**
**रश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना भरेण ।**
**मेरोर्मूर्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य**
**स्वोष्मोदस्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरास्वर्धुनीव ।।६८।।**

**अन्वयः**—मेरोः मूर्धनि पार्श्वयोः अश्वैः द्रुतखुरदलिता, शश्वत् उत्कीर्णस्वर्णरेणुः भरेण अश्रान्तभ्रान्तचक्रक्रमनिखिलमिलन्नेमिनिम्ना, स्वोष्मोदस्ताम्बुरिक्तप्रकटितपुलिना, उद्धूसरा स्वर्धुनी इव रवेः रथस्य एकवीथी वः अघं विघटयतु ।

**व्याख्या**—मेरोः मूर्धनि शिखरदेशे (रथस्य) पार्श्वयोः अश्वैः द्रुतखुरदलिता, द्रुताः शीघ्रं प्रसरन्तः ये खुराः तैः दलिता खण्डिता, अतएव शश्वत् पुनः पुनः उत्कीर्णस्वर्णरेणुः उत्कीर्णानि यानि स्वर्णानि तेषां रेणुः धूलिः यस्यां सा, पुनश्च भरेण अश्रान्तम् अनवरतं भ्रान्तस्य भ्रमतः चक्रस्य यः क्रमः तेन निखिलं सम्पूर्णं मिलन्ती अन्तः प्रविशन्ती या नेमिः चक्रधारा तया निम्ना अवनता, स्वस्य उष्मणा तापेन उदस्तं शुष्कं यत् अम्बु तेन रिक्तं शून्यम् अतएव प्रकटितं पुलिनं यस्याः सा, तोयोत्थितं तत् पुलिनम् इत्यमरः । उद्धूसरा ईषत् पाण्डुरवर्णा स्वर्धुनी गङ्गा इव रवेः सूर्यस्य रथस्य एकवीथी एकपदवी, वः युष्माकम् अघं पापं विघटयतु खण्डयतु । उपमालङ्कारः ।

**भावार्थः**—मेरोः शिखरदेशे अश्वखुरदलनेन उद्गतैः स्वर्णरेणुभिः उभयतः व्याप्ता, अनवरतं भ्रमतः चक्रस्य नेमिघातेन निम्ना सूर्यरथस्य एकवीथी, आतपतापात् शुष्कपुलिना, धूसरा स्वर्गङ्गा इव अदृश्यत । सा एकवीथी युष्माकं पापं खण्डयतु ।

**टिप्पणी**—अत्र कवेः कल्पनापाटवं लक्षणीयम् । घण्टामाघवत् छत्रभारविवच्च कविरयम् एकवीथी मयूरः ख्यातव्यः ।

The one-lined path of the Chariot on Meru whose sides are filled with golden sands, pounded by the hoofs of horses and look caved in due to continuous pressure of moving wheel, appears as the stream of heavenly Gaṅgā, looking grey with sandy banks, exposed due to drying of water by heat. May that path remove your vices.68

मेरुके शिखर देशमें दोनों ओर अश्वोंके खुरपातसे खण्डित सुवर्ण रेणुसे युक्त, भारी होनेके कारण निरन्तर चलती हुई चक्रकी नेमिसे गहरी, अपनी उष्मासे जल शुष्क होनेके कारण किनारोंको प्रकटित करनेवाली स्वर्गङ्गाकी सदृश दृश्यमान सूर्यरथके एक चक्रका गतिपथ आप लोगोंके पाप क्षय करें ॥६८॥

**नन्तुं नाकालयाना मनिशमुपयतां पद्धतिः पङ्क्तिरेव**
**क्षोदो नक्षत्रराशेरदयरयमिलच्चक्रपिष्टस्य धूलिः ।**
**हेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो-**
**यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नो रथो वः ।।६९।।**

**अन्वयः**—अनिशं नन्तुम् उपयतां नाकालयानां पङ्क्तिः एव यस्य पद्धतिः, अदयरयमिलच्चक्रपिष्टस्य नक्षत्रराशेः क्षोदः एव धूलिः, सुरशिखरिदरीः पूरयन् नेमिनादः हरीणां हेषाह्लादः, यथा भुवि, दिवि व्यक्तचिह्नः, तीव्रभानोः सः रथः वः अव्यात् ।

**व्याख्या**—अनिशं सन्ततं नन्तुम् उपयताम् उपगच्छतां नाकालयानां नाकः स्वर्गः एव आलयः गृहं येषां तेषां दिविषदां पङ्क्तिः एव यस्य रथस्य पद्धतिः मार्गः, अदयः तीव्रः यो रयः वेगः तेन मिलत् युक्तं यत् चक्रं तेन पिष्टस्य दलितस्य नक्षत्रराशेः नक्षत्रसमूहस्य क्षोदः चूर्णः एव धूलिः, सुरशिखरिणः मेरोः दरीः गुहाः पूरयन् नेमिनादः एव अश्वानां हेषाह्लादः हेषानन्दरवः, यथा भुवि भूतले, दिवि स्वर्गे अपि तथा व्यक्तचिह्नः व्यक्तानि प्रकटितानि चिह्नानि यस्य तथाभूतः, तीव्रभानोः तीव्राः प्रखराः भानवः किरणाः यस्य तस्य सूर्यस्य सः रथः वः युष्मान् अव्यात् रक्षतु ।

**भावार्थः**—सन्ततं नन्तुम् उपगच्छतां देवानां पङ्क्तिः यस्य रथस्य यानमार्गः, तीव्रवेगवता चक्रेण पिष्टस्य नक्षत्रराशेः चूर्णः यस्य रथस्य धूलिसदृशः, मेरोः कन्दराः पूरयन् नेमिनादः यस्य अश्वानां हेषानन्दरवः, पृथिव्यामिव स्वर्गेऽपि प्रकटितगतिचिह्नः सः रवेः रथः युष्मान् रक्षतु ।

The Chariot of the Sun leaves its impressions in heaven as in earth. The line of heaven-dwellers coming to offer prayer is its path. The powders of the stars pounded by swiftly moving wheel are its dust. The sound of the rims that fill in the caves of Meru, is the neighing of horses. May that Chariot of the Sun protect you.69

निरन्तर प्रणाम करनेकेलिए आनेवाले देवताओंकी पङ्क्ति ही जिसका मार्ग है, प्रखर वेगवान् चक्रके द्वारा पिसे हुए ताराओंके चूर्ण ही जिसका धूलि है, मेरु कन्दराओंको पूर्ण करने वाला नेमिनाद ही अश्वोंके हिनहिनाहट हैं, पृथिवीमें जैसे

आकाशमें भी वैसे चिह्न प्रकटित करनेवाला उष्णांशुके रथ आप लोगोंकी रक्षा करें ॥६१॥

**निस्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां**
**वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्दतां वन्दितुं नो ।**
**मन्दाकिन्याममन्दः पुलिनभृति मृदुर्मन्दरे मन्दिराभे**
**मन्दारै र्मण्डितारं दधदरि दिनकृत्स्यन्दनः स्तान्मुदे वः ॥७०॥**

**अन्वयः**—निःस्पन्दानां विमानावलिविततदिवाम् आनन्दसान्द्रोद्यमं वहतां, वन्दितुम् अपि नो विन्दतां देववृन्दारकाणां वृन्दैः मन्दारैः माण्डितारम्, अरि दधत्, पुलिनभृति मन्दाकिन्याम् अमन्दः, मन्दिराभे मन्दरे मृदुः दिनकृत्स्यन्दनः वः मुदे स्तात् ।

**व्याख्या**—निःस्पन्दानां स्थिराणां, विमानानां व्योमयानानाम् आवल्या वितता आच्छादिता द्यौः व्योम यैः तेषाम्, आनन्देन सान्द्रोद्यमं प्रभूतोत्साहं वहतां, वन्दितुं पूजयितुमपि नो विन्दताम् अलभमानानां देववृन्दारकाणां देवमुख्यानां वृन्दैः समूहैः मन्दारैः जवाकुसुमैः मण्डितानि अराणि यस्य तत् अरि चक्रं दधत्, पुलिनं विभर्ति इति पुलिनभृत् भृ+क्विप्, तस्यां मन्दाकिन्यां गङ्गायाम् अमन्दः अविलम्बितः, मन्दिराभे मन्दिरतुल्ये मन्दरे गिरौ मृदुः दिनकृत्स्यन्दनः सूर्यरथः वः युष्माकं मुदे आनन्दाय स्तात् भवतु । अनुप्रासोऽलङ्कारः । गृहसामान्यवाची मन्दिरशब्दोऽत्र देवालयार्थनिष्ठः, तेन मन्दिरस्य महत्त्वमुपमानत्वं च युक्तम् । देवैरसुरैश्च समुद्रमथनवेलायां मन्दरः मन्थनदण्ड-रूपमापत्, अतस्तत्रैव रथस्य मृदुता युक्ता ।

**भावार्थः**—पूजयितुमागता देवमुख्याः आकाशं विमानैः आच्छाद्य आनन्देन कृतबहूद्यमा अपि यस्य पूजनसुयोगं सहसा न प्राप्नुवन्ति, तत्प्रदत्तैः जवाकुसुमैः शोभितं चक्रं दधत्, मन्दाकिन्याः पुलिने तीव्रगतिः, मन्दिरतुल्ये मन्दरगिरौ मन्थरः सूर्यस्य रथः युष्माकमानन्दं तनोतु ।

The important Gods who do not get even a chance to offer their prayer inspite of their best attempts, cover the sky with their Chariots and wait paitently. They decorate then the spokes of wheel of the chariot with Mandāra flowers. That Chariot of the Sun which runs fast in the sandy banks of Mandākinī, and is slow on temple like Mandara mountain, may bring you happiness.70

विमानोंके द्वारा आकाशको छा देनेवाले, आनन्दसे बहुत कोशिश करनेसे भी वन्दन करनेकी सुयोगसे वञ्चित, धीर देवगणके द्वारा मन्दार फूलोंसे मण्डित अरोंसे युक्त

चक्रोको धारण करने वाला, गङ्गाके पुलिनमें चञ्चल, पर मन्दिर सम मन्दर गिरिमें धीर सूर्यके रथ आप लोगोंको आनन्द दें । ७०॥

**चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्ता-**
**नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।**
**रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य**
**स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥७१॥**

**अन्वयः**—चक्री जगदुपकृतये नित्ययुक्तस्य यस्य चक्रारपङ्क्तिं, हरिः अपि च हरीन्, धूर्जटिः धूर्ध्वजान्तान्, नक्षत्रनाथः अक्षं, वरुणः अरुणं, कुबेरः कूबराग्रं, प्रीतिप्रसन्नः सुराणां सङ्घः अपि रंहः अन्वहं स्तौति, अहिमरुचेः सः स्यन्दनः वः अवतात् ।

**व्याख्या**—चक्री हरिः जगदुपकृतये, जगताम् उपकृतिः तस्यै जगदुपकाराय, नित्यं सन्ततम् उद्यतस्य चेष्टमानस्य यस्य स्यन्दनस्य चक्रारपङ्क्तिं चक्रस्य अरपङ्क्तिम् अरसमूहं, हरिः इन्द्रः अपि हरीन् अश्वान्, धूर्जटिः शिवः धूर्ध्वजान्तान्, ध्वजः पताका, धुरि अग्रे युगे वा यो ध्वजः तस्य अन्तान् अग्रभागान्, नक्षत्रनाथः चन्द्रः अक्षं, वरुणः अरुणं, कुबेरः कूवराग्रं युगन्धरप्रान्तं, प्रीत्या प्रसन्नः सुराणां सङ्घः अपि रंहः वेगम् अन्वहं प्रत्यहं स्तौति, अहिमा रुचिः यस्य तस्य उष्णांशोः सूर्यस्य सः स्यन्दनः रथः वः अवतात् रक्षतु । अत्र प्रस्तुतानां चक्र्यादीना मेकस्तवनक्रियाभिसम्बन्धात्तुल्ययोगितालङ्कारः ।

**भावार्थः**—विष्णुः जगतः उपकाराय नित्यं प्रवृत्तस्य यस्य रथस्य चक्रारसमूहम्, इन्द्रः अश्वान्, शिवः ध्वजान्तान्, चन्द्रः अक्षं, वरुणः अरुणं, कुवेरः युगन्धरप्रान्तं, प्रीतिमुग्धः देवसङ्घश्च, शीघ्रगामित्वं प्रत्यहं स्तौति, सूर्यस्य सः रथः युष्मान् रक्षतु ।

Viṣṇu, the holder of the discuss, praises the wheel, Hari (i.e. Indra) speaks highly of haris (horses), Dhūrjatī (I.e. Śiva) eulogises the end of the banner, Moon, the lord of the stars, commends the axle, Varuṇa glorifies Aruṇa, Kubera admires the front portion of the chariot, other gods too praise daily the speed out of devotion. That Car of the Sun, which is engaged for the welfare of the world, may save you.71

जगतके उपकारकेलिए सर्वदा प्रवृत्त जिस रथके चक्रको विष्णु (चक्री), अश्वोंको इन्द्र (हरि), पताकाकी अग्र भागको शिव (धूर्जटि), अक्षको चन्द्र, अरुणको वरुण, कूवरके अग्र भागको कुवेर और वेगको आनन्दसे देवतागण स्तुति करते हैं, सूर्यके वह रथ आप लोगोंकी रक्षा करें ॥७१॥

**नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः**
**पादोपान्ते स्तुतोऽलं बलिहरिरभसाकर्षणावद्धवेगः ।**
**भ्राम्यन् व्योमाम्बुराशावशिशिरकिरणस्यन्दनः सन्ततं वो**
**दिश्याल्लक्ष्मीमपारामतुलितमहिमेवापरोमन्दराद्रिः ।।७२।।**

**इति रथवर्णनम् ।**

**अन्वयः**—नेत्राहीनेन मूले विहितपरिकरः, सिद्धसाध्यैः मरुद्भिः पादोपान्ते अलं स्तुतः, बलिहरिरभसाकर्षणावद्धवेगः, व्योमाम्बुराशौ भ्राम्यन् अशिशिरकिरणस्यन्दनः अतुलितमहिमा अपरः मन्दराद्रिः इव, वः अपारां लक्ष्मीं सन्ततं दिश्यात् ।

**व्याख्या**—नेत्रं वेष्टनरज्जुः इव अहीनः अहीनां सर्पाणाम् इनः प्रभुः वासुकिः, तेन मूले अधोभागे विहितपरिकरः, विहितः कृतः परिकरः वेष्टनं यस्य तथाभूतः, सिद्धाः गन्धर्वाः, साध्याः गणदेवताः, तैः मरुद्भिः देवैः पादोपान्ते पाददेशे अलं स्तुतः प्रार्थितः, बलिः वैरोचनिः, हरिः इन्द्रः तयोः रभसाकर्षणेन यथाशक्ति आकर्षणेन आवद्धः संजातः वेगो यस्य तथाभूतः, व्योम इव अम्बुराशिः अब्धिः तस्मिन् भ्राम्यन्,, अतुलितमहिमा अतुलनीयमाहात्म्यः अपरः मन्दराद्रिः इव, अहीनेन महता, नेत्रा चालकेन अरुणेन मूले रथस्य आद्यभूमौ विहितपरिकरः कृतवस्त्रवेष्टनः, सिद्धसाध्यैः मरुद्भिः पादोपान्ते अलं स्तुतः, बलिनः बलवन्तः ये हरयः अश्वाः तैः रभसेन आनन्देन अथवा रभसा बलात् रभसो वेगहर्षयोः इति विश्वः । आकर्षणात् आवद्धवेगः प्राप्तवेगः, व्योम आकाशः अम्बुराशिः इव तस्मिन् भ्राम्यन् अतुलितमहिमा, अशिशिरकिरणस्य उष्णांशोः स्यन्दनः रथः वः युष्मभ्यम् अपाराम् अनन्तां लक्ष्मीं श्रियं सन्ततं दिश्यात् ददातु । उपमालङ्कारः ।

**भावार्थः**—वासुकिना परिवेष्टितः, सिद्धसाध्यप्रभृतिभिः देवैः पाददेशे स्तुतः, इन्द्र प्रमुखैः देवैः बलिप्रभृतिभिः रक्षोभिश्च युगपत् आकृष्यमाणः मन्थनदण्डवत् वेगवान्, आकाशतुल्ये समुद्रे भ्राम्यन् मन्दराद्रिः इव, महता अरुणेन मूले कृतवस्त्रवेष्टनः, सिद्धसाध्यादिभिः देवैः स्तुतः, बलवद्भिः अश्वैः शीघ्रमाकर्षितः वेगवान्, समुद्रतुल्ये आकाशे भ्रमन्, महामहिमः सूर्यरथः युष्मभ्यं प्रभूतां श्रियं प्रयच्छतु ।

As Mandar mountain tied to its base by rope-like Śeṣa, and pulled by Valī and Indra moved in the ocean, while Siddhas, Sādhyas and other gods were offering prayers; so the Chariot of the Sun around which a cloth is bound by the expert driver Aruṇa and pulled by strong horses, moves in the sky, while Siddhas, Sādhyas, and other gods offered prayers. May that majestic Chariot give you much wealth.72

वासुकि द्वारा परिवेष्टित, सिद्ध, साध्य वगैरह देवताओंके द्वारा पाद देशमें सेवित, इन्द्र और बलि प्रभृतियोंके द्वारा मन्थन दण्डकी तरह जोरसे खींचा हुआ मन्दराद्रिके तुल्य, अरुणके द्वारा मूल देशमें वस्त्रसे परिवेष्टित, सिद्ध साध्य प्रभृति देवताओंके द्वारा अर्चित, बलवान् अश्वोंसे आकाश-वारिधिमें वेगसे खींचा हुआ महामहिम सूर्यरथ आप लोगोंको चिरकाल सम्पद दान करें ।।७२।।

## अथ मण्डलवर्णनम्

**ज्यायो यद्बीजमह्नामपहृततिमिरं चक्षुषामञ्जनं यद्-**
**द्वारं यन्मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः ।**
**यद्वृष्ट्यम्भोनिधानं धरणिरससुधापानपात्रं महद् यद्**
**दिश्यादीशस्य भासां तदधिकममलं मङ्गलं मण्डलं वः ।।७३।।**

**अन्वयः**—ज्यायः यत् अह्नां वीजं, यत् अपहृततिमिरं चक्षुषाम् अञ्जनम्, यत् मुक्तिभाजां द्वारं, यत् अखिलभुवनज्योतिषाम् एकम् ओकः, यत् वृष्ट्यम्भोनिधानं, यत् महत् धरणिरससुधापानपात्रं, भासाम् ईशस्य अधिकम् अमलं तत् मण्डलं वः मङ्गलं दिश्यात् ।

**व्याख्या**—ज्यायः प्रशस्यतरं यत् अह्नां दिवसानां वीजम्, यत् अपहृतं तिमिरम् अन्धकारः, नेत्ररोगविशेषश्च येन तत्, चक्षुषाम् अञ्जनम्, यत् मुक्तिभाजां मुक्तिकामिनां द्वारम्, यत् अखिलभुवनज्योतिषां सकलजगत्तेजसाम् एकम् ओकः आश्रयस्थानम्, यत् वृष्ट्यम्भसां वृष्टिजलानां निधानम् आधारस्वरूपं, यत् महत् विशालं धरणिरससुधापान-पात्रं, धरण्याः पृथिव्याः रसः जलम् एव सुधा अमृतं तस्याः पानाय पात्रम्, भासां त्विषाम् ईशस्य पत्युः सूर्यस्य अधिकम् अमलं निर्मलं तत् मण्डलं वः युष्माकं मङ्गलं दिश्यात् विदधातु ।

**भावार्थः**—प्रशस्यतरं यत् सूर्यमण्डलं दिवसानां हेतुः, चक्षुषां तिमिरनाशकम् अञ्जनं, मुमुक्षूणां द्वारं, सकलजगत्तेजसाम् एकम् आश्रयस्थलं, वृष्टिजलानामाधारस्वरूपं, धरणिरसामृतस्य महत् पानपात्रं, भास्वतः उज्ज्वलं तत् मण्डलं युष्माकं मङ्गलं विदधातु ।

The majestic orb of the Sun is the prime cause of the day; is like the collyrium that removes darkness/nyctolopia; is the door of those aspiring for salvation; is the repository of all light of the world; is the store-house of rain water, and is the great drinking vessel of the earth. May that orb of the Sun look to your welfare.73

जो मण्डल दिनका अच्छा बीज है, अन्धकारको दूर करनेवाली आखोंके अञ्जन

है, मुक्तिकामी योगियोंके द्वार हैं, सारी जगतके तेजके एक आधार हैं, वृष्टिजलकी सृष्टिकारी हैं और जो धरणीरसका पान करनेकी एक बड़ा पानपात्र हैं, भास्वान् सूर्यके वह उज्ज्वल मण्डल आप लोगोंके मङ्गल विधान करें ॥७३॥

**वेलावर्धिष्णु सिन्धोः पय इव खमिवार्धोद्गताग्र्यग्रहोडु**
**स्तोकोद्भिन्नस्वचिह्नप्रसवमिव मधोरास्यमस्यन्मनांसि ।**
**प्रातः पूष्णोऽशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः**
**पौरस्त्यस्योद्गभस्ति स्तिमिततमतमःखण्डनं मण्डलं वः ॥७४॥**

**अन्वयः**—वेलावर्धिष्णु सिन्धोः पयः इव, अर्धोद्गताग्र्यग्रहोडु खम् इव, स्तोकोद्भिन्नस्वचिह्नप्रसवं मनांसि अस्यत् मधोः आस्य मिव, अद्रेः शिरःशेखरीभूतम् उद्गभस्ति, स्तिमिततमतमःखण्डनं, प्रातः पौरस्त्यस्य पूष्णः मण्डलं वः अशुभानि प्रशमयतु ।

**व्याख्या**—वेलायां तटप्रदेशे वर्धिष्णु वर्धनशीलं अलकृञ् निराकृञ् इत्यादिना इष्णुच्, सिन्धोः समुद्रस्य पयः जलमिव, अग्र्याः ग्रहाः अग्र्यग्रहाः, ते च उडूनि च तेषां समाहारः अग्र्यग्रहोडु, अर्धोदितम् अग्र्यग्रहोडु यस्मिन् तत् खम् आकाशम् इव, स्तोकम् अल्पम् उद्भिन्नः प्रकटितः स्वचिह्नप्रसवः निजाविर्भावसूचकफलपुष्पादिः यस्मिन् तत् मनांसि अस्यत् मनोविक्षेपकम् मधोः वसन्तस्य आस्यं मुखमिव, अद्रेः पर्वतस्य मेरोः शिरःशेखरीभूतं शिरोमुकुटस्वरूपम्, उद्गताः गभस्तयः किरणाः यस्य तत्, स्तिमिततमं निश्चलतमं यत् तमः अन्धकारः तस्य खण्डनं नाशकं, प्रातः पौरस्त्यस्य पूर्वदिग्भवस्य दक्षिणापश्चात् पुरसस्त्यक् इति त्यक्, पूष्णः सूर्यस्य मण्डलं वः युष्माकम् अशुभानि अमङ्गलानि प्रशमयतु नाशयतु । मालोपमालङ्कारः ।

**भावार्थः**—तटे वर्धनशीलं समुद्रजलमिव, अर्धदृष्टग्रहनक्षत्रमाकाशमिव, ईषद्विकसितपुष्पफलं वसन्तस्य मुखमिव, उदयाद्रेः शिरोमुकुटतुल्यम्, ऊर्ध्वप्रसारितरश्मिजालं तमोनाशि, पूर्वस्यां दिशि उद्भूतं सूर्यमण्डलं युष्माकम् अमङ्गलं नाशयतु ।

The circle of the Sun rises in the East in the morning, removes benumbing darkness, seems like a crown on the peak of the mountain, appears as the waves increasing on shore, looks like the sky filled with half-risen planets and stars, and approaches like the onset of the spring with distinctive feature of fresh sprouting that distracts mind. May that circle put all your worries to an end. 74

वेलामें बर्द्धनशील सिन्धुके जलके समान, अर्द्धोदित ग्रहनक्षत्रोंको धारण करनेवाले आकाशके तुल्य, अपने आगमनका सूचक मनोमुग्धकर अर्द्धप्रकाशित फल

फूलोंको धारण करने वाला वसन्तके मुखके सदृश, पर्वत (मेरु) शृङ्गके मुकुटकी तरह देदीप्यमान, दृश्यमान किरणोंसे अन्धकारको दूर करने वाला पूर्व दिशामें उदित सूर्यमण्डल आप लोगोंके अमङ्गल दूर करें ॥७४॥

**प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन**
**ज्यायःकिञ्जल्कपुञ्जो यदलिकुलशितेरम्बरेन्दीवरस्य ।**
**कालव्यालस्य चिह्नं महिततममहोमूर्ध्नि रत्नं महद् यद्**
**दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनं मण्डलं वः ॥७५॥**

**अन्वयः**—यत् मण्डलम् अलिकुलशितेः अम्बरेन्दीवरस्य ज्यायःकिञ्जल्कपुञ्जः, प्रातः पद्मरागेण येन प्रत्युप्तः अचलः तप्तहेमोज्ज्वलरुचिः, महिततमं कालव्यालस्य चिह्नम्, अहोमूर्ध्नि महत् रत्नम्, अविकलजगन्मण्डनं, दीप्तांशोः तत् मण्डलं वः अव्यात् ।

**व्याख्या**—यत् मण्डलम् अलिकुलमिव शितेः नीलस्य, अम्बरमेव इन्दीवरं तस्य व्योमनीलोत्पलस्य ज्यायःकिञ्जल्कपुञ्जः ज्यायान् केसरराशिः, प्रशस्य शब्दादीयसुनि, ज्य च इति ज्यादेशः । प्रातः पद्मस्येव रागो यस्य तेन पद्मरागेण येन मण्डलेन प्रत्युप्तः व्याप्तः अचलः, तप्तहेम इव उज्ज्वला रुचिः यस्य सः तप्तस्वर्णाभः भवति, यत् महिततमं प्रशस्यतमं काल एव व्यालः सर्पः तस्य चिह्नं, पुनश्च अहोमूर्ध्नि दिवसशिरसि महत् रत्नम्, अविकलं अखण्डं (चिरन्तनं) जगन्मण्डनं विश्वालङ्कारस्वरूपं दीप्तांशोः उष्णांशोः सूर्यस्य तत् मण्डलं वः युष्मान् अव्यात् रक्षतु । परम्परितं मालारूपकमलङ्कारः ।

**भावार्थः**—यत् सूर्यमण्डलं भ्रमरवत् नीलाभस्य अम्बरनीलोत्पलस्य महान् केसरपुञ्जो भवति, प्रातः पद्मरागसदृशस्य यस्य भासा मेरुः तप्तकाञ्चनकान्तिं धारयति, कालसर्पस्य महत् चिह्नं, दिवसशिरसो महत् रत्नं, विश्वस्य अलङ्कारस्वरूपं, तत् प्राभातिकं सूर्यमण्डलं युष्मान् रक्षतु ।

The most adorable orb of the Sun decorates the entire creation in the morning. It has the colour of the lotus/ruby. It invests the mountain with the brilliance of molten gold and looks like the long filaments of sky like lily resembling the colour of the cluster of bees. It is a distinguishing mark of time-like-snake and appears as a magnificient crest-jewel on the head of the day. May that orb protect you. 75

जो मण्डल अलि-कुल-नील आकाश नीलोत्पलके प्रभूत परागपुञ्ज हैं, प्रभातमें जिसके तेजसे मेरु पर्वत तरल सोनाकी कान्ति धारण करता है, काल सर्पके प्रदर्शक,

दिवसके शिरपर महान रत्नके तुल्य जगतकी शोभावर्द्धक उष्णांशु सूर्यके वह मण्डल आप लोगोंकी रक्षा करें ॥७५॥

**कस्त्राता तारकाणां पतति तनुरवश्यायविन्दुर्यथेन्दु-**
**र्विद्राणा दृक् स्मरारेरुरसि मुररिपोः कौस्तुभो नोद्गभस्तिः ।**
**वह्नेः सापह्नवेव द्युतिरुदयगते यत्र तन्मण्डलं वो**
**मार्तण्डीयं पुनीताद्दिवि भुवि च तमांसीव मुष्णन् महांसि ॥७६॥**

**अन्वयः**—यत्र उदयगते इन्दुः अवश्यायबिन्दुः यथा तनुः पतति, तारकाणां कः त्राता ? स्मरारेः दृक् विद्राणा, मुररिपोः उरसि कौस्तुभः नोद्गभस्तिः, वह्नेः द्युतिः सापह्नवा इव, भुवि तमांसि इव दिवि महांसि मुष्णत्, तत् मार्तण्डीयं मण्डलं वः पुनीतात् ।

**व्याख्या**—यत्र सूर्यमण्डले उदयगते उदयं गते द्वितीया श्रितातीत इति समासः, इन्दुः चन्द्रः अवश्यायविन्दुः यथा तुषारविन्दुरिव तनुः क्षीणः पतति, तारकाणां कः त्राता रक्षकः? स्मरारेः शिवस्य दृक् दृष्टिः विद्राणा शक्तिहीना भवति, मुररिपोः मुरारेः उरसि वक्षसि कौस्तुभः मणिः नोद्गभस्तिः न उद्गता गभस्तिः यस्मात् सः तेजोहीनः, वह्नेः अग्नेः द्युतिः तेजः सापह्नवा निष्प्रभा इव भवति, भुवि पृथिव्यां तमांसि अन्धकारान् इव दिवि व्योम्नि महांसि तेजांसि मुष्णत् अपहरत् तत् मार्तण्डीयं सौरं मण्डलं वः युष्मान् पुनीतात् पवित्रयतु ।

**भावार्थः**—सूर्ये उदिते चन्द्रः तुषारविन्दुवत् क्षीयते, नक्षत्रेशस्य ईदृशी दशा, का कथा नक्षत्राणाम् ? महेश्वरस्य दृष्टिः शक्तिहीना भवति, मुरारेः वक्षसि कौस्तुभोमणिः नो राजते, अग्नेः तेजश्च निष्प्रभं भवति, एवं सर्वेषां तेजसां मोषः सम्पद्यते 'भुवि अन्धकाराः इव दिवि अपि तेजांसि निलीयन्ते । एतादृङ्महातेजसः सूर्यस्य मण्डलं युष्मान् पुनातु ।

When the circle of the Sun rises the moon disappears like dew drops. Who can then protect the stars ? The eye of Śiva dazzles, the Kaustubha jewel of Viṣṇu does not emit rays, the brightness of fire is concealed. Like darkness from earth it takes away the brightness from heaven. May that solar circle purify you.76

जिसके उदयसे चाँद भी तुषारविन्दुके समान क्षीण हो जाता है, ताराओं की रक्षा करेगा कौन ? भगवान् शिवकी आँखें म्लान हो जाती हैं; मुरारिके वक्षमें कौस्तुभ निष्प्रभ हो जाता है; अग्निका तेज छिप जाता है, पृथिवीसे अन्धकारकी भाँति व्योमसे सब तेजोंको हरण करनेवाला सूर्यमण्डल आप लोगोंको पवित्र करे ॥७६॥

**यत् प्राच्यां प्राक् चकास्ति प्रभवति च यतः प्राच्यसावुज्जिहाना-**
**दिद्धं मध्ये यदह्नो भवति ततरुचा येन चोत्पाद्यतेऽहः ।**
**यत्पर्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो**
**विश्वानुग्राहि विश्वं सृजदपि च रवेर्मण्डलं मुक्तयेऽस्तु ।।७७।।**

**अन्वयः**–यत् प्राच्यां प्राक् चकास्ति, उज्जिहानात् यतः असौ प्राची प्रभवति, अह्नः मध्ये यत् इद्धं भवति, ततरुचा येन अहः उत्पाद्यते, यत् पर्यायेण लोकान् अवति, यच्च जगतां जीवितं, विश्वं सृजत्, अपि च विश्वानुग्राहि, तत् रवेः मण्डलं वः मुक्तये अस्तु ।

**व्याख्या**–यत् मण्डलं प्राच्यां पूर्वस्यां दिशि प्राक् आदौ चकास्ति दीप्यते, उज्जिहानात् उद्गच्छतः यतः यस्मात् असौ प्राची पूर्वा दिक् प्रभवति, उत्कर्षेण वर्तते, अह्नः दिवसस्य मध्ये यत् इद्धं दीप्तं भवति, तता रुक् यस्य तेन व्याप्ततेजसा येन मण्डलेन अहः दिनम् उत्पाद्यते, यत् पर्यायेण क्रमेण, गत्यर्थकात् इणो घञ्, लोकान् भुवनानि लोकस्तु भुवने जने इत्यमरः, अवति रक्षति, यच्च जगतां जीवितं जीवनं, विश्वं सृजत्, अपि च पुनश्च विश्वानुग्राहि विश्वपोषकं, तत् रवेः सूयस्य मण्डलं वः युष्माकं मुक्तये मोक्षाय अस्तु भवतु । आदित्याज्जायते वृष्टि वृष्टेरन्नं ततः प्रजाः ।

**भावार्थः**–सूर्यमण्डलं प्राक् प्राच्यां प्रकाशते, तेन प्राची दिक् सर्वोत्कर्षेण वर्तते । तन्मण्डलं क्रमशः दीप्तं सत् दिवसं सृजति, सर्वं जगच्च रक्षति, लोकानां जीवनं तस्मिन् निर्भरशीलम् । तदेव विश्वसृष्टेः हेतुभूतं जगन्मङ्गलविधायकं रवेः तन्मण्डलं युष्माकं मोक्षाय अस्तु ।

The circle of the Sun appears first in the east. Ascending upwards it invests the east with glory. It shines brilliantly in the mid-day; spreading across its brilliance, it heralds the arrival of the day. It is the life-force of the worlds. It creates the entire universe and rears it. May that solar circle give you liberation.77

जो मण्डल पूर्व दिशामें पहले प्रकाश पाता है; जिससे पूर्व दिशा गौरव विमण्डित होती है; दिनके मध्य भागमें जो प्रचण्ड होता है; जिससे दिनकी उत्पत्ति होती है, जो पर्याय क्रमसे आकर संसारकी रक्षा करता है, जो जगतका जीवन है, विश्वके स्त्रष्टा और उपकारी है, वैसे होने वाला सूर्य मण्डल आप लोगोंको मुक्ति प्रदान करे ।।७७।।

**शुष्यन्त्यूढानुकारा मकरवसतयो मारवीणां स्थलीनां**
**येनोत्तप्ताः स्फुटन्तश्चटिति तिलतुलां यान्त्यगेन्द्रा युगान्ते ।**
**तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृत्स्नं**
**संहृत्यालोकमात्रं प्रलघु विदधतः स्तान्मुदे मण्डलं वः ।।७८।।**

**अन्वयः**—युगान्ते मारवीणां स्थलीनाम् ऊढानुकाराः मकरवसतयः शुष्यन्ति, येन उत्तप्ताः अगेन्द्राः चट् इति स्फुटन्तः तिलतुलां यान्ति, अकाण्डत्रिभुवनदहनाशङ्कया कृत्स्नं धाम संहृत्य प्रलघु आलोकमात्रं विदधतः चण्डांशोः तत् मण्डलं वः मुदे स्तात् ।

**व्याख्या**—युगान्ते युगावसाने प्रलयकाले मारवीणां मरोः इमाः मारव्यः तासां स्थलीनाम् ऊढानुकाराः ऊढः धृतः अनुकारः सादृश्यं याभिः तथाभूताः सत्यः, मकरवसतयः समुद्राः शुष्यन्ति, येन सूर्यमण्डलेन उत्तप्ताः अगेन्द्राः महापर्वताः 'चट्' इति स्फुटन्तः तिलतुलां यान्ति तिलसादृश्यं लभन्ते, खण्डविखण्डिता भवन्तीत्यर्थः,अकाण्डे असमये त्रिभुवनस्य त्रिलोक्याः दहनाशङ्कया दाहाशङ्कया कृत्स्नं सम्पूर्णं धाम तेजः संहृत्य सङ्कोच्य प्रलघु क्षीणम् आलोकमात्रं आलोकः एव आलोकमात्रम् अस्वपदविग्रहः, विदधतः धारयतः चण्डांशोः उष्णांशोः सूर्यस्य तत् मण्डलं वः युष्माकं मुदे आनन्दाय स्तात् भवतु ।

**भावार्थः**—युगावसाने यस्य रवेः तेजसा शुष्काः समुद्राः मरुभूमितुल्याः दृश्यन्ते । पर्वता अपि उत्तप्ताः स्फुटन्तः खण्डविखण्डिताः तिलवत् भवन्ति । 'अकाले त्रिभुवनं दग्धं मास्तु इति चिन्तया यः स्वं तेजः संहृत्य आलोकमात्रं गृह्णाति, तस्य चण्डांशोः मण्डलं युष्मान् आनन्दयतु ।

The circle of the Sun makes the seas look like deserts at the time of dissolution by drying up their waters. The mountains get heated, and burst into small pieces like sesame seeds producing 'tad' sound. Apprehending untimely destruction of the universe, the Sun withdraws his full brightness and emits light only. May that circle of the Sun give you pleasure.78

प्रलयकालमें समुद्रको शुष्क कर मरुसदृश बनानेवाला, पर्वतको उत्तप्त कर तड् तड् ध्वनिसे खण्डित कर तिल सदृश करनेवाला, असमयमें ही त्रिभुवन दहनकी आशङ्कासे अपने तेजको संकुचित कर केवल आलोक धारण करनेवाला उष्णांशुका मण्डल आप लोगोंको आनन्द प्रदान करे ।।७८।।

**उद्यद्द्यूद्यानवाप्यां बहुलतमतमःपङ्कपूरं विदार्य**
**प्रोद्भिन्नं पत्रपार्श्वेष्वविरलमरुणच्छायया विस्फुरन्त्या ।**

**कल्याणानि क्रियाद्वः कमलमिव महन्मण्डलं चण्डभानो-**
**रन्वीतं तृप्तिहेतोरसकृदलिकुलाकारिणा राहुणा यत् ।।७९।।**

**अन्वयः**—द्यूद्यानवाप्यां बहुलतमतमःपङ्कपूरं विदार्य उद्यत्, पत्रपार्श्वेषु अविरलं विस्फुरन्त्या अरुणच्छायया प्रोद्भिन्नं, तृप्तिहेतोः अलिकुलाकारिणा राहुणा असकृत् अन्वीतं कमलमिव चण्डभानोः यत् महत् मण्डलं वः कल्याणानि क्रियात् ।

**व्याख्या**—द्यूद्यानवाप्यां द्यौः आकाशम् एव उद्यानं तस्य वापी सरसी तस्यां, बहुलतमम् प्रभूततमं, प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु इत्यमरः । यत् तमः तिमिरं तदेव पङ्कपूरः पङ्कप्रवाहः तं विदार्य उद्यत् उद्भूतं, पत्रपार्श्वेषु वाहनपार्श्वेषु च अविरलं विस्फुरन्त्या प्रोल्लसन्त्या अरुणच्छायया अरुणकान्त्या अनूरुप्रभया च प्रोद्भिन्नं विकसत्, तृप्तिहेतोः तृप्त्यर्थम् अलिकुलाकारिणा अलीनां कुलम् अलिकुलं तस्य आकार इव आकार; अस्यास्तीति तेन, भ्रमरपुञ्जसदृशेन राहुणा असकृत् पुनः पुनः अन्वीतं अनुसृतं, कमलं पद्ममिव चण्डभानोः तीक्ष्णांशोः सूर्यस्य यत् महत् मण्डलं तत् वः युष्माकं कल्याणानि मङ्गलानि क्रियात् करोतु । उपमालङ्कारः ।

**भावार्थः**—आकाशोद्यानस्य पुष्करिण्याः तमस्तुल्यं अतिबहलं पङ्कस्तरम् उद्भिद्य प्रोद्भूतम्, अरुणकान्तिपत्रविशिष्टं, राहुसदृशैः भ्रमरैरनुगम्यमानं, कमलमिव, पङ्काभम् अन्धकारराशिमुद्भिद्य वाहनपार्श्वे अरुणकान्त्या देदीप्यमानं भ्रमरपुञ्जसदृशवर्णेन राहुणा बहुवार मनुसृतं सूर्यमण्डलं युष्माकं मङ्गलं विदधातु ।

**टिप्पणी**—'तत्' पदमाहरणीयम् । अथवा 'यत्' पदं परिवर्त्य 'तत्' करणीयम् ।

The grand circle of the Sun like lotus of shining ruby (Aruṇa) colour beside the Patra (leaf/horses), followed frequently by bee-like Rāhu for gratification, emerges from the deep layer of darkness mud in the tank of heaven-garden. May that solar circle do good to you.79

आकाशरूपी उद्यानके तालाबमें घन अन्धकार रूपी पङ्कप्रवाहको भेदकर जाते हुए, पत्र पार्श्वमें पतित अरुण किरणसे विकसित हुए, अलिकुलतुल्य राहु द्वारा बहुवार आक्रान्त कमलके समान सूर्यमण्डल आप लोगोंके मङ्गल विधान करें ।।७९।।

**चक्षुर्दक्षद्विषो यन्न तु दहति पुरः पूरयत्येव कामं**
**नास्तं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।**
**यद् वीतश्रान्ति शश्वद् भ्रमदपि जगतां भ्रान्तिमभ्रान्ति हन्ति**
**ब्रध्नस्याव्याद् विरुद्धक्रिय मथच हिताधायि तन्मण्डलं वः ।।८०।।**

**इतिमण्डलवर्णनम्**

**अन्वयः**—यत् दक्षद्विषः चक्षुः पुरः कामं न दहति तु पूरयति एव, यत् मरुद्भिः न आस्तम् अपि तु जुष्टम्, यत् इह भवाब्धौ नियमिनां यानपात्रम्, यत् शश्वत् वीतश्रान्ति भ्रमदपि अभ्रान्ति जगतां भ्रान्तिं हन्ति, विरुद्धक्रियम् अथच हिताधायि, ब्रध्नस्य तत् मण्डलं वः अव्यात्।

**व्याख्या**—यत् मण्डलं दक्षद्विषः शिवस्य चक्षुः, तु किन्तु पुरः अग्रतः कामं कन्दर्पं न दहति, न भस्मीकरोति, कामम् अभिलाषं पूरयति एव, यत् मरुद्भिः वायुभिः न आस्तं न क्षिप्तम्, परन्तु मरुद्भिः देवैः जुष्टं सेवितम्, यत् इह भवाब्धौ भवसागरे नियमिनां योगिनां यानपात्रं नौकास्वरूपं भवति, यत् शश्वत् सर्वदा वीता त्यक्ता श्रान्तिः यस्मिन् तत् भ्रमत् अपि भ्रमणं कुर्वत् अपि अभ्रान्ति निःसंशयं जगतां भ्रान्तिं भ्रमम् आलोकदानेन हन्ति नाशयति, विरुद्धा विपरीता क्रिया कर्म यस्य तत् विरुद्धक्रियम् अथच हिताधायि हितमाधातुं शीलमस्येति, ताच्छील्ये णिनिः, हितकरं ब्रध्नस्य सूर्यस्य तत् मण्डलं वः युष्मान् अव्यात् रक्षतु । विरोधोऽलङ्कारः ।

**भावार्थः**—यत् मण्डलं शिवस्य नेत्रं सत् अपि कामं न दहति, सर्वेषां कामं (अभिलाषं) पूरयति, यत् चालयितुं मरुतः न प्रभवन्ति, प्रत्युत मरुतः (देवाः) सेवन्ते, भवसागरतरणे यत् योगिनां नौकासदृशं भवति, यत् सर्वदा भ्रमदपि जगतां भ्रमं भ्रान्तिं निर्भ्रमं दूरीकरोति, एवं स्वयं विरुद्धक्रियमपि लोकानां हितकारकं तत् सूर्यमण्डलं युष्मान् रक्षतु ।

**इति मण्डलवर्णनम्**

The circle of the Sun is the eye of Śiva (enemy of Dakṣa) which does not burn Kāma (cupid) but fulfils kāma (all desires). Winds do not fling it away, rather serve it. It acts like a boat to ferry the saints in the ocean of the world. It moves all over the worlds without feeling fatigued. It removes the ingorance completely. Thus, though of contrasting nature, it is conducive to welfare of all. May that circle of the Sun save you.80

जो दक्षशत्रु (शिव)के नेत्र होनेसे भी कामको दग्ध नहीं करता है, पर कामको (कामना को) पूरण करता है; जिसे मरुत (वायु) चालित नहीं कर सकता, पर मरुतों (देवताएँ) पूजा करते हैं, जो इस संसार-सागरमें उतरनेकेलिए योगियोंकी नाव है; जो विश्रामके बिना बहुवार जगतको भ्रमण करनेसे (स्वयं भ्रमी होने से) भी ठीक रूपसे जगतका भ्रम दूर करता है, ऐसे विरुद्ध कर्म करने वाला होकर भी हित साधन करने वाला सूर्यमण्डल आप लोगोंकी रक्षा करें ॥८०॥

## अथ सूर्यवर्णनम्

**सिद्धैः सिद्धान्तमिश्रं श्रितविधि विबुधैश्चारणैश्चाटुगर्भं**
**गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यतात्म ।**
**सार्घं साध्यैर्मुनीन्द्रैर्मुदिततममनोमोक्षिभिः पक्षपातात्**
**प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः ।।८१।।**

**अन्वयः**—सिद्धैः सिद्धान्तमिश्रं, विबुधैः श्रितविधि, चारणैः चाटुगर्भं, गन्धर्व-मुख्यैः गीत्या, अहिपतिभिः मुहुः, यातुधानैः यतात्म, साध्यैः सार्घं, मुनीन्द्रैः मुदितत-ममनः, मोक्षिभिः पक्षपातात्, प्रात; प्रारभ्यमाणस्तुतिः, विश्ववन्द्योदयः, रविः वः अवतु ॥

**व्याख्या**—सिद्धैः देवविशेषैः सिद्धान्तमिश्रं सिद्धान्तसम्बलितं, विबुधैः श्रितविधि श्रितः विधिः यस्मिन् कर्मणि तद् यथा स्यात्तथा विधिम् अनुसृत्य, चारणैः चाटुगर्भं चाटूक्तिपूर्णं, गन्धर्वमुख्यैः गीत्या गानेन, अहिपतिभिः फणीन्द्रैः मुहुः, यातुधानैः राक्षसैः यतात्म आत्मसंयमपूर्वकं, साध्यैः गणदेवताभिः अर्घेण सह, मूल्ये पूजाविधावर्घः इत्यमरः, मुनीन्द्रैः मुदिततममनः सानन्दं, मोक्षिभिः मुक्तिकामिभिः पक्षे साध्ये योगे पातः स्थितिः तस्मात्, ल्यव् लोपे पञ्चमी, प्रात; प्रारभ्यमाणस्तुतिः प्रारभ्यमाणा क्रियमाणा स्तुतिः प्रार्थना यस्य सः, प्र+आङ्-रभ्+शानच् कर्मणि, विश्वैः सर्वैः वन्द्यः स्तुत्यः उदयः यस्य सः रविः सूर्यः वः युष्मान् अवतु रक्षतु ।

**भावार्थः**—सिद्धाः सिद्धान्तमनुसृत्य, देवाः यथाविधि, चारणाः चाटुपूर्वकं, किन्नरमुख्याः गानेन, फणीन्द्राः पुनः पुनः, राक्षसाः आत्मसंयममाश्रित्य, साध्याः संपूज्य, मुनीन्द्राः सानन्दं, मुक्तिकामिनश्च योग माध्यमेन प्रातः सर्वैः वन्द्यं यं रविं स्तुवन्ति, सः रविः युष्मान् रक्षतु ।

**टिप्पणी**—पक्षः साध्योयोगः, तस्मिन् पातः स्थितिः तस्मात् "पक्षस्तु मासार्धेगृह-साध्ययोः' इति हैमः । साध्यो योगान्तरे सुरे.....इति मेदिनी ।

The Siddhas pray according to their doctrines, the Vivudhas (Gods wise people) following their Śāstras, the Cāraṇas with flattering words, the Gandharvas with singing, the chief of serpents repeatedly, the Yātudhānas controlling their impulses, the Sādhyas offering argha, and the illustrious sages with full pleasure. People aspiring for salvation also pray him by meditation. Thus, the Sun whose uprising in the morning is prayed by all, may protect you.81

सिद्धगण सिद्धान्तपूर्ण वाक्यों में, देवताएँ विधिके अनुसार, चारण चाटूक्ति से, मुख्य गन्धर्वगण गीत से, सर्पराज वारम्बार, राक्षस संयमके साथ, साध्यगण पूजापूर्वक मुनियाँ बड़े आनन्द से, और मुक्तिकामी लोग योग से प्रभातमें जिसकी स्तुति करते हैं, विश्ववन्द्योदय वह रवि आप लोगोंकी रक्षा करें ॥८१॥

**भासामासन्नभावादधिकतरपटोश्चक्रवालस्य तापा**
**च्छेदादच्छिन्नगच्छत्तुरगखुरपुटन्यासनिःशङ्कटङ्कैः ।**
**निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणात्पातु व स्त्रिप्रकारं**
**तप्तांशुस्तत्परीक्षापर इव परितः पर्यटन् हाटकाद्रिम् ॥८२॥**

**अन्वयः**—भासाम् आसन्नभावात्, अधिकतरपटोः चक्रवालस्य तापात्, अच्छिन्नगच्छत्तुरगखुरपुटन्यासनिःशङ्कटङ्कैः छेदात्, निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणात्, त्रिप्रकारं तत्परीक्षापरः इव हाटकाद्रिं परितः पर्यटन् तप्तांशुः वः पातु ।

**व्याख्या**—अत्र स्वर्णकार इव सूर्यः हेमाद्रिं त्रिधा परीक्षते, भासाम् त्विषाम् आसन्नभावात् नैकट्यात्, अधिकतरपटोः पटुतरस्य चक्रवालस्य मण्डलस्य तापात् तापं विधाय इत्यर्थः..ल्यव् लोपे पञ्चमी, अनेन अग्निदाहोदर्शितः, अच्छिन्नं निरन्तरं गच्छन्तः ये तुरगाः अश्वाः तेषां खुरपुटन्यासः एव निःशङ्कटङ्कः, टङ्कः पाषाणदारणः इत्यमरः, तैः छेदात्, छेदं सम्पाद्य, निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणात्, निःसङ्गम् असक्तं सत् चलत् यत् स्यन्दनाङ्गं चक्रं तस्य भ्रमणेन घूर्णनेन निकषणात् रेखां निपात्य इत्यर्थः, त्रिप्रकारं, तापनच्छेदननिकषणरूपेण त्रिधा तत्परीक्षापरः, हेमाद्रेः हेमपरीक्षणरतः इव हाटकाद्रिं स्वर्णाद्रिं मेरुं परितः पर्यटन् परिक्रामन् तप्तांशुः उष्णांशुः रविः वः युष्मान् पातु रक्षतु । उत्प्रेक्षालङ्कारः ।

**भावार्थः**—प्रथमतः निकटवर्तिनः मण्डलस्य तापेन, द्वितीयतः टङ्कायमानानां तुरगखुरपुटानां न्यासात् जायमानेन छेदेन, तृतीयतः निरन्तरं चलतः चक्रस्य गतिपथ-रेखया निकषणेन हेमाद्रेः स्वर्ण त्रिधा परीक्षमाणः इव अद्रिं परितः पर्यटन् रविः युष्मान् रक्षतु ।

The Sun moving around the golden mountain tests its gold in three-fold manner viz. by heating it with bright rays, by cutting with pickaxe-like hoofs of continuously running horses, and by rubbing with moving wheel of the chariot. May that Sun save you.82

समीप होनेसे अति प्रचण्ड मण्डलके तापसे, निरन्तर चलते हुए अश्वोंके टङ्क (छोनी)के सदृश खुरोंसे काटकर और लग्न न होकर चलता हुआ रथचक्रके भ्रमण रेखा

युक्त कसौटीसे तीन प्रकार परीक्षा करनेकी भाँति हेमाद्रिकी चार ओर घूमते हुए रवि आप लोगोंकी रक्षा करें ॥८२॥

**नो शुष्कं नाकनद्या विकसितकनकाम्भोजया भ्राजितं तु**
**प्लुष्टा नैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः ।**
**नो शृङ्गाणि द्रुतानि द्रुतममरगिरेः कालधौतानि धौता-**
**नीद्धं धाम द्युमार्गे प्रदयति दयया यत्र सोऽर्कोऽवताद्वः ॥८३॥**

**अन्वयः**—यत्र द्युमार्गे इद्धं धाम दयया प्रदयति (रवौ) विकसितकनकाम्भोजया नाकनद्या नो शुष्कम्, तु भ्राजितम्, नन्दनोद्यानलक्ष्मीः नैव प्लुष्टा, भृशतरम् उपभोग्या भवति, अमरगिरेः कालधौतानि शृङ्गाणि नो द्रुतानि, द्रुतं धौतानि, सः अर्कः वः अवतात् ।

**व्याख्या**—यत्र यस्मिन् अर्के द्युमार्गे आकाशपथे इद्धं दीप्तं धाम तेजः दयया प्रदयति सङ्कोचयति, भावे सप्तमी, विकसित कनकाम्भोजया विकसितं प्रस्फुटितं कनकाम्भोजं हेमनलिनं यस्यां तया नाकनद्या स्वर्णद्या गङ्गया नो शुष्कं, तु परंतु भ्राजितं राजितम्, नन्दनोद्यानस्य लक्ष्मीः नन्दनोपवनश्रीः नैव प्लुष्टा नैव दग्धा, प्रत्युत भृशतरं बहुलम् उपभोग्या भवति, अमरगिरेः मेरोः कालधौतानि सौवर्णानि शृङ्गाणि शिखराणि नो द्रुतानि नो विगलितानि, वैपरीत्येन द्रुतं शीघ्रं भासा धौतानि, सः अर्कः रविः वः अवतात् रक्षतु ।

**भावार्थः**—आकाशमार्गे यस्मिन् सूर्ये स्वस्य दीप्तं तेजः सङ्कोचयति, हेमनलिनराज़िता स्वर्गङ्गा न शुष्का, प्रत्युत शोभिता, नन्दनोद्यानलक्ष्मीः न दग्धा, परन्तु नितरामुपभोग्या भवति, सुमेरोः हिरण्मयानि शृङ्गाणि न विगलितानि, परं शीघ्रं सौरप्रभया क्षालितानि, सः सूर्यः युष्मान् रक्षतु ।

When the Sun makes out of kindness its radiant rays mild the Svargaṅgā looks beautiful with blooming of golden lotuses, in stead of getting dry. The beauty of Nandanodyāna (divine garden) becomes enjoyable, in stead of being burnt, and the golden peaks of Meru get immediately washed, in stead of melting. May that Sun protect you all.83

सूर्य आकाशमार्गमें अपनी दीप्त किरणोंको दयासे मृदु करने पर विकसित कमलोंको धारण करनेवाली स्वर्गङ्गा शुष्क नहीं हुई, पर शोभा पाई, नन्दन उद्यानकी लक्ष्मी (शोभा) नहीं जल गई, पर उपभोग्या हुई, हेमाद्रिके सुवर्ण शृङ्ग नहीं पिघल गया पर चमकने लगा, वह सूर्य आप लोगोंकी रक्षा करें ॥८३॥

**ध्वान्तस्यैवान्तहेतु र्न भवति मलिनैकात्मनः पाप्मनोऽपि**
**प्राक् पादोपान्तभाजां जनयति न परं पङ्कजानां प्रबोधम् ।**
**कर्ता निःश्रेयसानामपि न तु खलु यः केवलं वासराणां**
**सोऽव्यादेकोद्यमेच्छाविहितबहुबृहद्विश्वकार्योऽर्यमा वः ।।८४।।**

**अन्वयः**—यः ध्वान्तस्य एव न अन्तहेतुः, मलिनैकात्मनः पाप्मनोऽपि, प्राक् पङ्कजानां न, परं पादोपान्तभाजां प्रबोधं जनयति, केवलं वासराणां न, निःश्रेयसानामपि कर्ता खलु, एकोद्यमेच्छाविहितबहुबृहद्विश्वकार्यः सः अर्यमा वः अव्यात् ।

**व्याख्या**—यः अर्यमा न ध्वान्तस्य अन्धकारस्य एव अन्तहेतुः, विनाशहेतुः, मलिनैकात्मनः मलिनस्वरूपस्य पाप्मनः पापस्य अपि अन्तहेतुः भवति । प्राक् पूर्व पङ्कजानां न, परंतु पादोपान्तभाजां चरणाश्रितानां प्रबोधं विकासं चैतन्यं च जनयति, यः न केवलं वासराणां दिवसानां कर्ता, अपि तु निःश्रेयसानां कल्याणानां, निश्चितं श्रेयो निःश्रेयसम्, अचतुर विचतुर इत्यादिना अजन्तो निपात्यते, मोक्षस्यापि कर्ता खलु, एकोद्यमेच्छाविहितबहुबृहद्विश्वकार्यः, एकश्चासौ उद्यमश्चेति एकोद्यमः, तस्मिन् या इच्छा, तया विहितानि सम्पादितानि बहूनि बृहन्ति विश्वकार्याणि येन सः, अर्यमा सूर्यः वः युष्मान् अव्यात् रक्षतु ।

**भावार्थः**—सूर्यः न केवलं ध्वान्तं दूरयति, पापमपि नाशयति, सः न केवलं पङ्कजानां, चरणाश्रितानां भक्ताना मपि प्रबोधं (विकासं चैतन्यं च) जनयति, सः न केवलं दिवसानां, मङ्गलानां मोक्षस्य च कर्ता खलु, एकया एव प्रचेष्टया बहु विश्वकार्यं कुर्वाणः सः सूर्यः युष्मान् रक्षतु ।

The Aryamā not only removes darkness but also washes the vices. It awakens the lotuses alongwith arousing consciousness of the devotees, who pray at his feet. He is not only the harbinger of day but also is the giver of liberation. Thus, with one attempt he performs many activities in the universe. May that Aryama save you.84

जो अन्धकारको ही विनाश नहीं करते साथ मलिन पाप को, पहले केवल पद्मोंके नहीं, पाद (किरण) सेवा करने वालोंके भी प्रबोध (विकास, चैतन्यका जागरण) करते हैं; जो दिनकर हैं, और मोक्षकारक भी हैं, एक उदय होनेकी इच्छासे विश्वके बहुत बृहत्कार्य करनेवाले वह सूर्य आप लोगोंकी रक्षा करें ।।८४।।

**लोटँल्लोष्टाविचेष्टः श्रितशयनतलो निःसहीभूतदेहः**
**सन्देही प्राणितव्ये सपदि दश दिशः प्रेक्षमाणोऽन्धकाराः ।**

**निःश्वासायासनिष्ठः परमपरवशो जायते जीवलोकः**
**शोकेनेवान्यलोकानुदयकृति गते यत्र सोऽर्कोऽवताद्वः ।।८५।।**

**अन्वयः**—यत्र उदयकृति अन्यलोकान् गते सपदि दश दिशः अन्धकाराः प्रेक्षमाणः जीवलोकः शोकेन इव लोष्टाविचेष्टः लोटन् श्रितशयनतलः, निःसहीभूतदेहः, निःश्वासायासनिष्ठः, प्राणितव्ये सन्देही, परमपरवशः जायते, सः अर्कः वः अवतात् ।

**व्याख्या**—यत्र उदयकृति अभ्युन्नतिकारके सूर्ये अन्यलोकान् गते, सपदि सहसा दश दिशः अन्धकाराः प्रेक्षमाणः जीवलोकः प्राणिजगत्, शोकेन इव लोष्टाविचेष्टः लोष्टवत् मृत्खण्डवत् अविचेष्टः चेष्टाशून्यः लोटन् भूमौ पतन्, श्रितशयनतलः, श्रितं शयनतलं येन सः शय्यामाश्रितः, निःसहीभूतदेहः, अनिःसहः निःसहः भूतः निःसहीभूतः, अभूततद्भावे च्विः, देहः यस्य सः दुर्वहशरीरः, निःश्वासे यः आयासः श्रमः, तस्मिन् निष्ठा यत्नः यस्य सः, प्राणितव्ये जीवितव्ये सन्देही, परमपरवशः अतीव पराधीनः जायते ईश्वरमवलम्बते च, सः अर्कः वः अवतात् रक्षतु । उत्प्रेक्षालङ्कारः, वाक्यार्थहेतुकं काव्यलिङ्गं च ।

**भावार्थः**—जगदुन्नतिविधायके यस्मिन् रवौ लोकान्तरं गते, दशदिशः तमसाच्छन्नाः विलोकयन् जीवलोकः शोकेन इव लोष्टवत् निश्चेष्टः दुर्वहदेहः सन् भूमौ लुठन् शय्या माश्रयति, निःश्वासे कष्टमनुभवन् जीवनधारणे सन्देही अतीव अवशः जायते, ईश्वरम् अवलम्बते च, स रविः युष्मान् रक्षतु ।

When the Sun moves away to other world, seeing all the ten quarters dark, the animals as if overwhelmed with sorrow lie on ground like a lump of clay, feel weak, pant heavily and go to sleep apprehending their lives at stake. They then submit themselves to god. May that Sun protect you.85

जगतके अभ्युदयकर्त्ता जो सूर्य अन्य लोकमें चल जाने पर सहसा दश दिशाओंको अन्धकारनिमग्न देखते हुए प्राणीजगत शोकसे मानो लोटेके समान चेष्टारहित होकर थकावटसे शय्याका आश्रय लेता है, अपने जीवनमें भीत और अत्यन्त विवश होकर सांस भरता है, वह सूर्य आप लोगोंकी रक्षा करें ।।८५।।

**क्रामँल्लोलोऽपि लोकांस्तदुपकृतिकृतावाश्रितः स्थैर्यकोटिं**
**नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् ।**
**यस्तापस्यापि हेतुर्भवति नियमिना मेकनिर्वाणदायी**
**भूयात्स प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ।।८६।।**

**अन्वयः**—यः लोलः लोकान् क्रामन् अपि तदुपकृतिकृतौ स्थैर्यकोटिम् आश्रितः,

नृणां दृष्टिं विजिह्मां विदधत् अपि अन्तः अत्यन्तभद्रां करोति, नियमिनां तापस्य हेतुः अपि एकनिर्वाणदायी भवति, प्रागवस्थाधिकतरपरिणामोदयः सः अर्कः वः श्रिये भूयात्।

**व्याख्या**—यः लोलः चञ्चलः लोकान् भुवनानि क्रामन् लंघयन् अपि तदुपकृतिकृतौ तेषां लोकानाम् उपकृतिकृतौ उपकारकरणे स्थैर्यकोटिं स्थिरतायाः अन्तिमपर्यायम् आश्रितः, नृणां लोकानां दृष्टिं दृशं विजिह्मां कुञ्चितां विदधत् कुर्वन् अपि, अरालं वृजिनं जिह्म मूर्मिमत् कुञ्चितं नतम् इत्यमरः, अन्तः अभ्यन्तरे अत्यन्तभद्रां सुप्रसन्नां करोति, नियमिनां योगिनां तापस्य दुःखस्य हेतुः अपि एकः निवार्णदायी मुक्तिदायी भवतीति विरोधः, तापस्य उष्णतायाः इति तत्परिहारः, प्रागवस्थाधिकतरपरिणामोदयः। प्रागवस्थायाः पूर्वावस्थायाः अधिकतरः परिणामः परिणतिः यस्य तथाभूतः उदयः यस्य तथाभूतः सः अर्कः वः युष्माकं श्रिये मङ्गलाय भूयात्। विरोधोऽलङ्कारः।

**भावार्थः**—यः सूर्यः सत्वरं जगन्ति लंघयन्नपि तेषा मुपकारकरणे अतीवस्थिरः, लोकानां दृष्टिं स्वतापेन कुञ्चितां कुर्वन्नपि अन्तर्दृष्टिं सुप्रसन्नां कुरुते, पुनश्च योगिनां दुःखस्य (उष्णतायाः) हेतुः अपि मुक्तिदायी भवति, उदयावस्थायाः क्रमशः प्रचण्डतरः ऊर्ध्वगामी स सूर्यः युष्माकं मङ्गलं विदधातु।

Though the Sun moves fast in worlds, still is very firm in doing good acts. It dazzles the eyes of people but purifies their internal senses. It causes heat but gives liberation to ascetics. May that Sun, more mature than before, bring you all prosperity.86

जो सूर्य शीघ्र संसारको आक्रमण (लंघन) करनेसे भी उपकार करनेमें दृढ़ है, लोगोंकी दृष्टिको कुञ्चित करनेसे भी अन्तरात्माको विशेष भावसे प्रसन्न करता है, योगियोंके तापदायी होनेसे भी मोक्षदाता है, पूर्व उदयकालीन अवस्थासे अधिक परिवर्तनके साथ जानेवाले वह सूर्य आप लोगोंके मङ्गल विधान करें ॥८६॥

**व्यापन्नर्तुर्न कालो व्यभिचरति फलं नौषधि र्वृष्टि रिष्टा**
**नेष्टैस्तुप्यन्ति देवा नहि वहति मरुन्निर्मलाभानि भानि।**
**आशाः शान्ता न भिन्दन्त्यवधि मुदधयो बिभ्रति क्ष्माभृतः क्ष्मां**
**यस्मिंस्त्रैलोक्यमेवं न चलति तपति स्तात् स सूर्यः श्रिये वः ॥८७॥**

**अन्वयः**—यस्मिन् तपति कालः व्यापन्नर्तुः न, ओषधिः फलं न व्यभिचरति, वृष्टिः इष्टा, देवाः इष्टैः न तृप्यन्ति नहि, मरुत् वहति, भानि निर्मलाभानि, आशाः शान्ताः, उदधयः अवधिं न भिन्दन्ति, क्ष्माभृतः क्ष्मां बिभ्रति, त्रैलाक्यम् एवं चलति, सः सूर्यः वः श्रिये स्तात्।

**व्याख्या**—यस्मिन् सूर्ये तपति, भावे सप्तमी, काल: वसन्तादि: व्यापन्नर्तु: विनष्टर्तु: न भवति, ओषधि: धान्ययवादि: फलं न व्यभिचरति, यथाकालं फलं प्रसूते इत्यर्थ:, वृष्टि: इष्टा अनुकूला, देवा: इष्टै: यागादिभि: न तृप्यन्ति नहि तृप्यन्ति एव, मरुत् वायु: वहति, भानि नक्षत्राणि नक्षत्रमृक्षं भंतारा तारकाप्युडु वा स्त्रियाम् इत्यमर:, निर्मला आभा कान्ति: येषां तानि निर्मलद्युतीनि भवन्ति, भशब्दोऽत्र भाधारनभोमण्डलवाची; आशा: दिश: शान्ता: प्रसन्ना:, उदधय: अवधिं सीमां न भिन्दन्ति न लंघयन्ति, क्ष्माभृत: राजान: पर्वताश्च क्ष्मां पृथिवीं बिभ्रति धारयन्ति, त्रैलोक्यम् त्रिभुवनम् एवं चलति, स: सूर्य: व: युष्माकं श्रिये मङ्गलाय स्तात् भवतु।

**भावार्थ:**—यस्मिन् सूर्ये तपति, ऋतव: यथाकालम् आयान्ति यान्ति च, धान्यव्रीह्यादय: वृक्षलताश्च पुष्पफलं धारयन्ति, वृष्टि: यथाकालं भवति, देवा: यज्ञादिभि: तृप्यन्ति, वायु: सम्यक् वहति, नभोमण्डलं विमलं भवति, दिश: प्रसन्ना: दृश्यन्ते, सागरा: सीमां न लंघयन्ति, राजान: गिरयश्च पृथिवीं पुष्णन्ति, एवं विश्वं यथारीति प्रचलति, स: सूर्य: युष्माकं मङ्गलं विदधातु ।

**टिप्पणी**—न चलति स्थाने 'प्रचलति' इति विधेयम्, अन्यथा नञ: आधिक्यं स्यात्।

When the Sun shines, the cycle of seasons does not deviate its course; plants never fail to bear fruits in time; rains fall in due course; the gods are pleased with sacrifices, wind blows favourably; the stars shine brilliantly; the quarters remain calm; the seas never transgress their limits; and the kings/mountains look after earth well. May that Sun confer good fortunes on you.87

जिस सूर्यके प्रकाशसे ऋतुएँ नियत समय पर आती हैं; वृक्षलताएँ बिना विघ्नसे फल धारण करती हैं; ठीक समय पर वृष्टि होती है, देवताएँ यज्ञादिसे तृप्त होते हैं; वायु बहता है; ताराएँ निर्मल कान्ति धारण करते हैं; दिशाएँ निर्मल होती हैं; समुद्र वेला-लंघन नहीं करता; पर्वत पृथिवीको परिपुष्ट करते हैं; इस तरह ठीकसे तीन भुवन चलता है; वह सूर्य आप लोगोंका मङ्गल करें ॥८७॥

**कैलासे कृत्तिवासा विहरति विरहत्रासदेहोढकान्त:**
**श्रान्त: शेते महाहावधिजलधि विना छद्मना पद्मनाभ: ।**
**योगोद्योगैकतानो गमयति सकलं वासरं स्वं स्वयम्भू-**
**र्भूरित्रैलोक्यचिन्ताभृति भुवनविभौ यत्र भास्वान् स वोऽव्यात् ।।८८।।**

**अन्वयः**—यत्र भुवनविभौ भूरि त्रैलोक्यचिन्ताभृति कृत्तिवासाः विरहत्रासदेहोढ-कान्तः कैलासे विहरति, श्रान्तः पद्मनाभः अधिजलधि छद्मना विना महाहौ शेते, स्वयम्भूः योगोद्योगैकतानः स्वं सकलं वासरं गमयति, सः भास्वान् वः अव्यात् ।

**व्याख्या**—यत्र यस्मिन् भुवनविभौ जगत्प्रभौ सूर्ये भूरि बहुलं त्रैलोक्यस्य चिन्तां बिभर्ति इति तस्मिन् त्रैलोक्यचिन्ताभृति, क्विप्च इति भृञः क्विप्, त्रिभुवनदायित्वं वहति, कृत्तिः चर्म वासः वसनं यस्य सः कृत्तिवासाः शिवः, विरहत्रासात् देहे ऊढा कान्ता येन सः, विरहभयेन देहे प्रियां धारयन्, कैलासे विहरति, श्रान्तः क्लान्तः पद्मनाभः विष्णुः छद्मना विना कपटं विना, आत्मनः श्रान्तत्वं प्रकाश्य इत्यर्थः, अधिजलधि, जलधौ इति अधिजलधि, विभक्त्यर्थे अव्ययीभावः, समुद्रे, महांश्चासौ अहिश्चेति महाहिः, तस्मिन् महोरगे शेषे शेते, स्वयम्भूः ब्रह्मा योगोद्योगैकतानः, योग श्चित्तवृत्तिनिरोधः, तस्य उद्योगे एकतानः एकनिष्ठः सन्, स्वं स्वकीयं सकलं वासरं सर्वं दिवसं गमयति यापयति, सः भास्वान् सूर्यः वः युष्मान् अव्यात् रक्षतु ।

**भावार्थः**—यस्मिन् सूर्ये त्रिभुवनचालनदायित्वं वहति, शिवः स्वकान्तां धारयन् कैलासे सुखं विहरति; विष्णुः आत्मनः श्रान्तिं स्पष्टं प्रकाश्य समुद्रे शेषोपरि शेते; ब्रह्मापि योगसाधनरतः सकलं स्वं वासरं गमयति; सः सूर्यः युष्मान् रक्षतु ।

**टिप्पणी**—'मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः, दैवे युगसहस्रे द्वे ब्राह्मः' (अहोरात्रः) इत्यमरः ।

When the Sun looks after the three worlds, Lord Śiva holds his consort close to his body for fear of separation and strolls in Kailāsa mountain; Lord Viṣṇu feeling very tired sleeps in the ocean on great snake (Śeṣa) without any pre-text. Lord Brahmā spends his days deeply immersed in meditation. May that Sun save you.88

जगदीश सूर्य त्रिभुवन भरणकी भार लेने पर, शिव विरह आशङ्कासे अपनी कान्ताको धारण कर कैलास में विहार करते हैं; श्रान्त विष्णु समुद्रमें बिना कपटतासे शेष नाग पर शयन करते हैं; ब्रह्मा अपना सम्पूर्ण दिवस योगनिष्ठ होकर बिताते हैं, वह सूर्य आप लोगोंकी मङ्गल करें ॥८८॥

**एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चीषि यानि**
**द्योतन्ते तानि सामान्ययमपि पुरुषांमण्डलेऽणुर्यजूंषि ।**
**एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो**
**वर्गः स्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्यः श्रिये वः ॥८९॥**

**अन्वयः**—दिनकृतः एतद् यन्मण्डलं खे तपति ताः ऋचः, यानि अर्चींषि द्योतन्ते तानि सामानि, मण्डले अयमपि अणुः पुरुषः यजूंषि, एवं वेदत्रितयमयं यं वेदवेदी समग्रः वर्गः वेद, स्वर्गापवर्गप्रकृतिः अविकृतिः सः अयं सूर्यः वः श्रिये अस्तु ।

**व्याख्या**—दिनकृतः अहस्करस्य सूर्यस्य एतत् यत् मण्डलं खे आकाशे तपति द्योतते ताः ऋचः ऋग्वेदमन्त्राः, यानि अर्चींषि तेजांसि द्योतन्ते दीप्यन्ते तानि सामानि, सामवेदमन्त्राः, मण्डले अयमपि अणुः सूक्ष्मः पुरुषः यजूंषि, यजुर्वेदमन्त्राः, एवं वेदत्रितयमयं यं सूर्यं वेदवेदी वेदज्ञः समग्रः वेद जानाति, स्वर्गश्च अपवर्गश्च स्वर्गापवर्गौ तौ एव प्रकृतिः यस्य सः स्वर्गमोक्षस्वरूपः, स्वयम् अविकृतिः विकाररहितः, सः अयं सूर्यः वः युष्माकं श्रिये मङ्गलाय भवतु ।

**भावार्थः**—सूर्यमण्डलं ऋग्वेदः, किरणाः सामानि, मण्डलमध्यवर्ती अणुः पुरुषः यजुर्वेदः, इति वेदविदः विदन्ति । एवं वेदत्रितयमयः स्वर्गमोक्षस्वरूपः विकाररहितः सोऽयं सूर्यः युष्माकं मङ्गलं विदधातु ।

**टिप्पणी**—सर्गापवर्गप्रकृतिः इति पाठो विधेयः । सर्गः सृष्टिः, अपवर्गः क्रियावसानं प्रलय इत्यर्थः, एव प्रकृतिः यस्य तथाभूतः, सृष्टिप्रलयात्मा । पुनश्च तदृचः करणीयम् ।

The circle of the Sun which emits rays in the sky is the ṛk, the rays that shine are Sāmas, that subtle primeval being in its middle is yajuṣ. One who is well-versed in Vedic lores knows that Sun alone is the combination of three Vedas; and is identical with heaven and liberation. He is not subject to change. May that Sun give you prosperity.89

दिनकर सूर्यके यह जो मण्डल आकाशमें तप रहा है, ये ऋचाएँ हैं, द्योतमान किरणें, सामवेदके मन्त्र हैं, मण्डलमें जो अणुपुरुष हैं वे यजुर्वेदके मन्त्र हैं; **वेदत्रयरूपी** देवको सब वेदज्ञ ही ऐसे समझते हैं, स्वर्ग और मोक्षके हेतु (या **सृष्टि** और प्रलयात्मा) वह निर्विकार सूर्य आप लोगोंके मङ्गल करें ॥८९॥

**नाकौकः प्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां**
**सर्वेषां साधु पातां जगदिदमदितेरात्मजत्वे समेऽपि ।**
**येनादित्याभिधानं निरतिशयगुणैरात्मनि न्यस्त मस्तु**
**स्तुत्यस्त्रैलोक्यवन्द्यै स्त्रिदशमुनिगणैः सोंऽशुमान् श्रेयसे वः ॥९०॥**

**अन्वयः**—इदं जगत् साधुपातां सर्वेषां नाकौकःप्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणाम् अदितेः आत्मजत्वे समेऽपि येन निरतिशयगुणैः आदित्याभिधानम् आत्मनि

न्यस्तं, त्रैलोक्यवन्द्यैः त्रिदशमुनिगणैः स्तुत्यः सः अंशुमान् वः श्रेयसे अस्तु ।

**व्याख्या**—इदं जगत् साधु सम्यक् पातां रक्षतां सर्वेषां नाकौकःप्रत्यनीकक्षतिपटुमहसां, नाकः स्वर्गः एव ओकः गृहं येषां ते नाकौकसः देवाः, तेषां प्रत्यनीकाः शत्रवः, तेषां क्षतौ क्षतिसम्पादने पटु क्षमं महः तेजः शक्तिः येषां तेषाम् 'महस्तूत्सवतेजसोः' इत्यमरः, वासवाग्रेसराणां वासवः इन्द्रः अग्रेसरः पुरोगामी मुख्य इत्यर्थः येषां तेषाम् इन्द्रादीनाम्, अदितेः आत्मजत्वे पुत्रत्वे समेऽपि समानेऽपि, येन अंशुमता निरतिशयगुणैः, निर् नास्ति अतिशयः उत्कर्षः यस्मात् तथाभूतैः गुणैः, आत्मनि स्वस्मिन् आदित्याभिधानम् आदित्य इति नाम न्यस्तम् आरोपितम्, त्रैलोक्यवन्द्यैः त्रिभुवनपूज्यैः त्रिदशमुनिगणैः देवर्षिसंघैः स्तुत्यः पूज्यः सः अंशुमान् सूर्यः वः युष्माकं श्रेयसे मङ्गलाय अस्तु भवतु ।

**भावार्थः**—देवशत्रुविनाशकाः जगत्पालकाः इन्द्रादयः सर्वे देवाः अदितेस्तनयाः, सूर्योऽपि अदितेस्तनयः । परन्तु गुणैः गरीयान् सूर्य एव आदित्य इति अभिधीयते, नान्यः कोऽपि । त्रिभुवनवन्द्यैः देवर्षिभिः स्तुत्यः सोऽयमशुमान् युष्माकं मङ्गलं विदधातु ।

The Sun and all other gods like Indra are the sons of Aditi; they nourish this world; they have strength to inflict injuries on the enemies of the dwellers of heaven. But the Sun alone is called Āditya. He is praised by the divine sages who are revered in three worlds. May that Sun give good fortune to you.90

इस जगतको ठीक भावसे रक्षा करनेवाले देवशत्रुओंके विनाशक इन्द्र आदि सब देवताएँ और सूर्य भी अदितिके तनय हैं, पर अनेक असाधारण गुणोंके कारण केवल सूर्य ही आदित्य नामसे ख्यात हैं । त्रिभुवनवन्द्य देवर्षिगण जिसके स्तुति करते हैं, वह अंशुमान् सूर्य आप लोगोंके मङ्गलकारी हों ॥९०॥

**भूमिं धाम्नोऽभिवृष्ट्या जगति जलमयीं पावनीं संस्मृताव-**
**प्याग्नेयीं दाहशक्त्या मुहुरपि यजमानात्मिकां प्रार्थितार्थैः ।**
**लीनामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्व-**
**ण्येवं सूर्योऽष्टभेदां भव इव भवतः पातु बिभ्रत् स्वमूर्तिम् ॥९१॥**

**अन्वयः**—जगति धाम्नः भूमिम्, अभिवृष्ट्या जलमयीं, संस्मृतौ अपि पावनीं, दाहशक्त्या आग्नेयीं, मुहुः प्रार्थितार्थैः अपि यजमानात्मिकां, ध्वान्तपक्षस्य पर्वणि अमृतकरघटिताम्, आकाश एव लीनाम्, एवं भव इव अष्टभेदां स्वमूर्तिं बिभ्रत् सूर्यः भवतः पातु ।

**व्याख्या**—जगति संसारे धाम्नः तेजसः भूमिं स्थानम्, क्षितिरूपाम्, अभिवृष्ट्या वर्षणेन जलमयीम्, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः इति आगमोक्तेः, संस्मृतौ

अपि स्मरणे अपि पावनीं पवित्रकारिणीम्, किंच पवनस्य इयं पावनी, तां वायुरूपाम्, दाहशक्त्या उत्तापेन आग्नेयीम् अग्निरूपाम्, मुहुः प्रार्थितार्थैः प्रार्थितार्थप्रदानेन यजमानात्मिकाम्, ध्वान्तपक्षस्य कृष्णपक्षस्य पर्वणि अमावास्यायाम्, अमृतकरः सुधांशुः, तेन घटितां सङ्गताम् चन्द्ररूपाम्, आकाशे एव लीनाम्, आकाशरूपाम्, एवं भवः शिवः इव अष्टभेदाम् अष्टप्रकारां स्वमूर्तिं बिभ्रत् धारयन् सूर्यः भवतः युष्मान् पातु रक्षतु ।

**भावार्थः**—जगति सर्वतेजसः आधाररूपेण भूमिरूपाम्, वर्षणेन जलरूपाम्, स्मरणमात्रेण पावनात् पवनरूपाम्, दाहशक्त्या अग्निरूपाम्, ईप्सितार्थप्रदानात् यजमानरूपाम्, अमावास्यायां चन्द्रेण सह मिलनात् सूर्यचन्द्ररूपाम्, आकाशे विलयात् आकाशरूपाम्, शिवेन तुल्याम् अष्टमूर्तिं दधानः सूर्यः युष्मान् रक्षतु ।

**टिप्पणी**—पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्य-ष्टमूर्तयः । अभिज्ञानशाकुन्तलस्य नान्दीश्लोके शिवोऽष्टमूर्तिरिति वर्णितः । महाभारतेऽपि (३.४९-८) तथा दर्शितः ।

The Sun is the origin of light. By creating rains in this earth, he displays his watery form; he indicates his wind-form as he purifies those who utter his name; he possesses fire-form as he has power to burn; he has Yajamāna form as he gives desired objects; as he is hidden in the sky he displays his sky-form and as he meets the moon on Amāvāsyā he reveals both Sun and-moon forms. Thus the Sun has eight forms like Śiva. May he give good fortune to you. 91

तेजके स्थान होनेसे भूमिरूप, वृष्टिसे जलरूप, स्मरणके मात्र पावन (पवित्र) करनेसे पवनरूप, दाहशक्तिके कारण अग्निरूप, ईप्सित अर्थदान करनेसे यजमानरूप, अमावास्यामें चन्द्रके साथ मिलनेसे सूर्य चन्द्र रूप, आकाशमें लीन होनेसे आकाशरूप धारण कर अष्टमूर्त्ति शिवके समान परिलक्षित सूर्य आप लोगोंकी रक्षा करें ॥९१॥

**प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो**
**भक्त्या त्यक्तोरुखेदोद्गति दिवि विनतासूनुना नीयमानः ।**
**सप्ताश्वाप्तापरान्तान्यधिकमधरयन् यो जगन्ति स्तुतोऽलं**
**देवैर्देवः स पायादपर इव मुराराति रह्नां पतिर्वः ॥९२॥**

**अन्वयः**—प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभः सप्ताश्वाप्तापरान्तानि जगन्ति अधिकम् अधरयन् विनतासूनुना भक्त्या त्यक्तोरुखेदोद्गति दिवि नीयमानः यः अपरः मुरारातिः इव देवैः अलं स्तुतः, अह्नां पतिः सः देवः वः पायात् ।

**व्याख्या**–प्राक्काले आदौ उन्निद्रा जागरिता या पद्मा लक्ष्मीः तस्याः कराभ्यां परिमलनेन संवाहनेन अविर्भवन्ती संजाता पादयोः शोभा यस्य सः, सूर्यपक्षे–प्राक्काले पूर्वाह्ने उन्निद्राणि विकसितानि यानि पद्मानि तेषाम् आकरः समूहः तेषां परिमलनेन परिग्रहणेन विमर्दनगन्धिना रजसा आविर्भवन्ती पादशोभा किरणशोभा यस्य सः; मुरारिपक्षे–आप्तापरान्तानि, आप्तानि व्याप्तानि अपरान्तानि अपरसीमाः येषां तानि सर्वतो व्याप्तानीत्यर्थः, सप्त जगन्ति सप्त भुवनानि आशु शीघ्रम् अधिकम् अधरयन् अधः कुर्वन्, 'स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्' इति श्रुतेः । सूर्यपक्षे–सप्तभिः अश्वैः आप्ताः अपरान्ताः अपरसीमाः येषां तानि जगन्ति अधिकम् अधरयन् नीचैः कुर्वन्, उच्चैर्गमनात् पृथिवी निम्ना क्षुद्रा च प्रत्यैयतेत्यर्थः । मुरारिपक्षे–विनतासूनुना गरुडेन भक्त्या उरुः महान् खेदः उरुखेदः, त्यक्तः उरुखेदः यस्यां तथाभूता उद्गतिः ऊर्ध्वगमनं यस्मिन् तद् यथास्यात्तथा दिवि सुरलोके नीयमानः उह्यमानः, सूर्यपक्षे–ऊर्वोः खेदः ऊरुखेदः जङ्घाखेदः त्यक्तोरुखेदोद्गति पूर्ववत्, भक्त्या दिवि आकाशे विनतासूनुना अनूरुणा नीयमानः, रथमारुह्य चालनात् ऊरुराहित्याच्च अनूरोः ऊरुखेदाभावः । यः सूर्यः अपरः मुरारातिः मुरारिः इव देवैः अलं स्तुतः, सः देवः अह्नां पतिः दिननाथः सूर्यः वः युष्मान् पायात् रक्षतु । श्लिष्टा उपमा ।

**भावार्थः**–प्रभाते पद्मायाः कराभ्यां संवाहनेन विष्णोः यथा पादशोभा जायते, विकसित पद्मरजोभिः तथा सूर्यस्य पादशाभा (किरणशोभा) जायते, विनतानन्दनः गरुडः ऊर्ध्वयात्राखेदम् अगणयन् भक्त्या सुरलोके विष्णुं वहति । वैनतेयः अरुणोऽपि भक्त्या ऊरुखेदमगणयन् सकलं जगत् अधः कुर्वन् आकाशे सूर्यं नयति । देवैः सर्वदा स्तुतः विष्णुरिव पूज्यः दिनेशः सूर्यः युष्मान् रक्षतु ।

By touching the hordes of blooming lotuses in the early morning the foot of the Sun looks beautiful. The son of Vinatā (Aruṇa) leads him in the heaven out of devotion forgetting his severe pain while going upwards. The Sun moves above all over worlds with his seven horses. Thus, the master of the day (Sun) is praised profusely by gods like Murārī whose foot looks beautiful when massaged by goddess Lakṣmī rising early and who is carrid by the Son of Vinatā (Garuḍa) forgetting severe pain, and who surpasses the seven worlds quickly. May that Sun protect you.92

प्रभातमें पद्माके करसे संवाहित होकर जिस विष्णुके पादशोभा प्रकट होती है, सात भुवनोंको शीघ्र (आशु) नीचे रखकर विनतानन्दन गरुड़ भक्तिसे ऊपर उड़नेके

महान श्रमकी परवाह न करके जिसको स्वर्गमें घुमाता है और जिसे देवता स्तुति करते हैं, उस विष्णुके समान प्रभातमें कर (किरण) पातके द्वारा पद्मोंको विकसित करनेसे जिस सूर्यके पाद (किरण) शोभान्वित होती है, ऊपर जानेसे जो जङ्घाखेद होता है उसको गणना न कर विनतानन्दन अरुण सम्पूर्ण जगतको नीचे रखकर भक्तिसे सात अश्वोंकी सहायतासे जिसे आकाशमें ले चलता है और देवगण जिसकी स्तुति करते हैं, वह दिनपति सूर्य आप लोगोंकी रक्षा करें ॥९२॥

**यः स्रष्टापां पुरस्तादचलवरसमभ्युन्नतेर्हेतुरेको**
**लोकानां च त्रयाणां स्थित उपरि परं दुर्विलंघ्येन धाम्ना ।**
**सद्यः सिद्ध्यै प्रसन्नद्युतिशुचिचतुराशामुखः स्ताद्विभक्तो-**
**द्वेधा वेधा इवाविष्कृत कमलरुचिः सोऽर्चिषामाकरो वः ॥९३॥**

**अन्वयः**—यः द्वेधा विभक्तः वेधा इव आविष्कृतकमलरुचिः, अपां स्रष्टा, पुरस्तात् अचलवरसमभ्युन्नतेः एकः हेतुः, परं दुर्विलंघ्येन धाम्ना त्रयाणां लोकानां च उपरिस्थितः, प्रसन्नद्युतिशुचिचतुराशामुखः अर्चिषाम् आकरः सः सद्यः वः सिद्ध्यै स्तात् ।

**व्याख्या**—द्वेधा विभक्तः वेधाः ब्रह्मा इव यः सूर्यः आविष्कृतकमलरुचिः आविष्कृता समुत्पादिता कमलानां रुचिः शोभा येन सः, पद्मयोनित्वात् ब्रह्मा, विकासकत्वात् सूर्यश्च पद्मशोभाकारकौ; अपां जलानां स्रष्टा, अप एव ससर्जादौ ब्रह्मा, आदित्याज्जायते वृष्टिः इति हेतोः उभौ जलानां स्रष्टारौ, पुरस्तात् आदौ अचलवराणां कुलाचलानां समभ्युन्नतेः एकः हेतुः, स्रष्टृत्वाद् ब्रह्मा, पूर्वस्यां दिशि उदयेन अचलवरस्य मेरोः गौरववर्धकः सूर्योऽपि, परम् अत्यन्तं दुर्विलंघ्येन अलंघनीयेन धाम्ना स्थानेन ब्रह्म, तेजसा सूर्यश्च त्रयाणां लोकानां त्रिभुवनस्य उपरि स्थितौ, प्रसन्नद्युतिशुचिचतुराशामुखः, प्रसन्ना निर्मला द्युतिः यासां तथाभूताः शुचयः शुभ्राः चतस्रः आशाः दिशः इव (अवस्थितानि) मुखानि यस्य सः, चतुर्मुखः ब्रह्मा, सूर्यपक्षे–प्रसन्नद्युत्या उज्ज्वलप्रभया शुचीनि चत्वारि आशामुखानि दिङ्मुखानि येन सः, अन्तर्भावितण्यर्थः शुचिः अथवा-प्रसन्नद्युतिषु शुचिषु चतसृषु आशासु मुखं यस्य सः, ब्रह्मा सूर्यश्च, अर्चिषाम् तेजसाम् आकरः खनिः सः सूर्यः सद्यः अचिरादेव वः युष्माकं सिद्ध्यै समृद्ध्यै स्तात् भवतु । अलङ्कारः पूर्णोपमा ।

**भावार्थः**—चतुर्मूखः ब्रह्मा पद्मयोनिरूपेण पद्मानां गौरववर्धकः, आदौ जलानां स्रष्टा, कुलाचलानाम् अभ्युन्नतेः हेतुः, अनभिभवनीयं पदमधिकृत्य त्रिभुवनस्य उपरि स्थितः । द्विधा विभक्तः ब्रह्मा इव पद्मानां विकासकः, वृष्टिवारिस्रष्टा, मेरोः गौरववृद्धिहेतुः अलंघ्यतेजसामाधार;, चतुर्दिग्दीपकः, सर्वोपरि विद्यमानः सूर्यः युष्माकं समृद्धिं विदधातु ।

Sun, the abode of light, like another Brahmā invests beauty in lotuses, creates water, brings to light the great height of

mountains and shines far above the three worlds with matchless brilliance. He also makes the faces of four quarters bright with light and Brahmā with his brilliant faces, faces four quarters. May that Sun give you success. 93

जो दो भागमें विभक्त ब्रह्माके समान पद्मोंकी शोभा वर्द्धित करता है, जलके स्रष्टा है, पूर्व दिशामें श्रेष्ठ पर्वत (मेरु)की उन्नति (गौरव)का कारण है, अलंघ्य तेजसे तीन भुवनोंके ऊपर विराजमान है, निर्मल कान्तिसे चार दिशाओंके मुख (चतुर्मुख) विमल बनानेवाले और तेजके आधार वह सूर्य आप लोगोंकी समृद्धि विधान करें ॥९३॥

**साद्रिद्यूर्वीनदीशा दिशति दश दिशो दर्शयन् द्राग्दृशो यः**
**सादृश्यं दृश्यते नो सदशशतदृशि त्रैदशे यस्य देशे ।**
**दीप्तांशु र्वः स दिश्यादशिवयुगदशादर्शितद्वादशात्मा**
**शं शास्त्यश्वांश्च यस्याशयविदतिशयाद्दन्दशूकाशनाद्यः ॥९४॥**

**अन्वयः**—यः साद्रिद्यूर्वीनदीशाः दश दिशः द्राक् दर्शयन् दृशः दिशति, सदशशतदृशि त्रैदशे देशे यस्य सादृश्यं नो दृश्यते, अशिवयुगदशादर्शितद्वादशात्मा, दन्दशूकाशनाद्यःयस्य अतिशयात् आशयवित् अश्वांश्च शास्ति, सः दीप्तांशुः वः शं दिश्यात् ।

**व्याख्या**—यः सूर्यः साद्रिद्यूर्वीनदीशाः, अद्रिश्च, द्यौश्च, उर्वीच, नदीशाश्च अद्रिद्यूर्वीनदीशाः, तैः सह वर्तमानाः सपर्वताकाशपृथिवीसागराः दश दिशः द्राक् झटिति दर्शयन् प्रकाशयन् दृशः नेत्राणि दिशति परिचालयति, सदशशतदृशि, दशशतदृक् इन्द्रः तेन सह वर्तमाने त्रैदशे तिस्रो दशा येषां ते त्रिदशाः देवाः, तेषामयं त्रैदशः, तस्मिन् देशे सुरलोके यस्य सूर्यस्य सादृश्यं साम्यं नो दृश्यते, नोपलभ्यते, अशिवयुगदशादर्शितद्वादशात्मा अशिवयुगम् अमङ्गलकालः प्रलय इत्यर्थः, तस्य दशा स्थितिकालः, तस्यां दर्शिताः प्रकाशिताः द्वादश आत्मानो येन सः, दन्दशूकाः सर्पाः अशनं खाद्यं यस्य सः गरुडः, तस्य आद्यः ज्येष्ठः अरुणः यस्य सूर्यस्य अतिशयात् विशेषतः आशयवित् आशयम् अभिप्रायं वेत्ति जानातीति आशयवित् (विद्+क्विप्) अश्वान् शास्ति चालयति, सः दीप्तांशुः उष्णांशुः सूर्यः वः युष्माकं शं मङ्गलं दिश्यात् विदधातु ।

**भावार्थः**—यः सूर्यः पृथिव्याकाशगिरिसागरैः साकं दशदिशः आलोकयन् प्राणिनामवलोकनशक्तिं जनयति, स्वर्गेऽपि यच्छदृशः कश्चन नावलोक्यते, यः पुनः प्रलयकाले द्वादश रूपाणि धारयति, अरुणः यस्य इच्छानुसारम् अश्वान् चालयति, सः सूर्यः युष्माकं मङ्गलं विदधातु । अनुप्रासोऽलङ्कारः ।

**टिप्पणी**—उर्वीति कथनेन गिरिसागरादीनामन्तर्भुक्तिं जानन्नपि कविः सौरशक्तिप्रकटनार्थमौपलाक्षणिकपदैः तथा निर्दिशति ।

**कृत्वा द्वादशधात्मानं द्वादशादित्यतां गतः**
**संहृत्यैकोऽर्णवं सर्वं त्वं शोषयसि रश्मिभिः ।।**-म०भा०३-३-५९

श्लोके 'द' इत्यस्य प्रयोगो लक्षणीयः ।

The Sun makes visible the ten quarters along with mountains, sky, earth and the seas immediately. He reveals his twelve forms at the inauspicious time of dissolution. There is no one equal to him in the region of gods ruled by Indra. The elder brother of the eater of serpents (Aruṇa) is fully aware of his intention and controls accordingly the horses. May that brilliant Sun give you happiness. 94

जो सूर्य गिरि, समुद्र, आकाशादिसे सारी पृथिवीके साथ दश दिशाओंको आलोकित कर दर्शनशक्ति प्रदान करते हैं, इन्द्रके राज्य स्वर्गमें भी जिसके समान कोई नहीं है, सर्पभक्षक गरुड़के बड़ा भाई अरुण जिसके इच्छानुसार अश्वोंको चालित करता है, और जो प्रलयकालमें द्वादश रूप धारण करते हैं, वह उष्णांशु सूर्य आप लोगोंका मङ्गल करें ।।९४।।

**तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां**
**नोदन्वन्तो नुदन्ति प्रतिभयमशुभश्वभ्रपातानुबन्धि ।**
**आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र**
**त्रातुं यातेऽन्यलोकं स दिशतु दिवसस्यैकहेतुर्हितं वः ।।९५।।**

**अन्वयः**—यत्र अन्यलोकं त्रातुं याते, ह्रदनदसरसीनिर्झराम्भोजिनीनां तीर्थानि व्यर्थकानि, अशुभश्वभ्रपातानुबन्धि प्रतिभयम् उदन्वन्तः न नुदन्ति, नाकापगायाः आपः अपि मज्जतां नैव कलुषमुषः (भवन्ति) दिवसस्य एकहेतुः सः वः हितं दिशतु ।

**व्याख्या**—यत्र यस्मिन् रवौ अन्यलोकं भुवनान्तरं त्रातुं रक्षितुं गते, ह्रदनदसरसीनिर्झराम्भोजिनीनां, ह्रदाः अगाधजलाशयाः नदाः शोणादयः, प्राक् स्रोतसो नद्यः, प्रत्यक्स्रोतसो नदाः (नर्मदां विना) सरस्यः कासाराः, निर्झराः झराः, अम्भोजिन्यः पुष्करिण्य;, तासां तीर्थानि, तत्तत्सम्बद्धानि तीर्थस्थानानि व्यर्थकानि विफलानि भवन्ति । अशुभश्वभ्रपातानुबन्धि, अशुभश्वभ्रं नरकः तस्मिन् पातः पतनम्, तम् अनुबध्नातीति अशुभश्वभ्रपातानुबन्धि नरकपातसम्बन्धि, प्रतिभयं भीतिम् उदन्वन्तः उदधयः न नुदन्ति नापनयन्ति, नाकापगायाः स्वर्णद्याः मन्दाकिन्याः आपः जलानि अपि मज्जतां स्नातां नैव कलुषमुषः कलुषं पापं मुष्णन्तीति कलुषमुष; (मुष+क्विप्) पापक्षयिण्यः भवन्ति, दिवसस्य एकहेतुः सः सूर्यः वः युष्माकं हितं दिशतु विदधातु ।

**भावार्थः**—सूर्ये अन्यलोकं त्रातुं गते, ह्रदनदसरोनिर्झरादिसंबद्धानि तीर्थानि निष्फलानि भवन्ति, गङ्गायाः जलमपि मज्जतां पापं हर्तुं न प्रभवति, समुद्राः नरकपातभयम् अपनेतुं न क्षमन्ते, दिवसस्य एको हेतुः सः सूर्यः युष्माकं हितं साधयतु ।

**टिप्पणी—तव यद्युदयो न स्यादन्धं जगदिदं भवेत् ।**
**न च धर्मार्थकामेषु प्रवर्तेरन् मनीषिणः** ।।—म०भा० ३-३-५३

When the Sun goes away to look after other regions, sacred bathing places like lakes, rivers, tanks and ponds full of lotuses turn useless. The oceans fail to ward off the fear of falling into inauspicious ditch-like hell. Even waters of heavenly river Gaṅgā become ineffective to wash away the sins of those who dip therein. May that sole source of the day (Sun) do good to you. 95

जो सूर्य अन्य लोकोंकी रक्षा करनेकेलिए चले जाने पर ह्रद, नदी, झील (सरसी), निर्झर तथा पुष्करिणी सम्बन्धी तीर्थ व्यर्थ हो जाते हैं, समुद्र नरकपातसम्बन्धी पापको दूर नहीं कर पाता है, स्वर्गङ्गाका जल भी मज्जन करने वालोंके पापको नष्ट नहीं कर सकता है, दिवसके एक हेतु वह सूर्य आप लोगोंके हित साधन करें ॥९५॥

**एतत्पातालपङ्कप्लुतमिव तमसैवैकमुद्गाढमासी-**
**दप्रज्ञाताप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः ।**
**यादृक् सृष्टेः पुरस्तान्निशि निशि सकलं जायते तादृगेव**
**त्रैलोक्यं यद्वियोगादवतु रवि रसौ सर्गतुल्योदयो वः ।।९६।।**

**अन्वयः**—यद्वियोगत् एतत् सकलं त्रैलोक्यं निशि निशि तादृगेव जायते, यादृक् सृष्टेः पुरस्तात् पातालपङ्कप्लुतमिव तमसा एव उद्गाढम् अन्तः सुप्तम् अप्रज्ञाताप्रतर्क्यं निरवगति तथा अलक्षणम् एकम् आसीत्, सर्गतुल्योदयः असौ रविः वः अवतु ।

**व्याख्या**—यद्वियोगात् यस्य रवेः वियोगात् विच्छेदात् एतत् सकलं त्रैलोक्यं त्रिलोकी एव त्रैलोक्यं, चतुर्वर्णादीनां स्वार्थ उपसंख्यानम् इति स्वार्थे ष्यञ्, तादृक् एव जायते सम्पद्यते, यादृक् सृष्टेः पुरस्तात् **प्राक्** पातालपङ्कप्लुतमिव पातालपङ्के मग्नमिव तमसा अन्धकारेण एव उद्गाढं व्याप्तम् अन्तः सुप्तम् अन्तर्निद्रम्, अप्रज्ञातं च तत् अप्रतर्क्यं चेति अप्रज्ञाताप्रतर्क्यम् अविज्ञेयं, निरवगति, निर् नास्ति अवगतिः यस्य तत् दुरधिगमं तथा अलक्षणम् अवर्णनीयम् एकम् अद्भुतं किमपि आसीत्, सर्गतुल्योदयः सर्गतुल्यः सृष्टितुल्यः उदयो यस्य सः असौ रविः सूर्यः वः युष्मान् अवतु रक्षतु ।

**भावार्थः**—सृष्टेः प्राक् प्रलयकाले एतत् त्रिभुवनं यथागभीरपङ्कमग्नमिव अन्धतमसा

आच्छन्नम्, अविज्ञेयं, गाढनिद्रापन्नं, निश्चलं, दुश्चिन्त्यं तथा अवर्णनीयमासीत्, सूर्याभावे दृश्यमानम् एतत्रिभुवनं तथैव प्रतिनिशं सम्पत्स्यते । सः असौ सृष्टितुल्योदयः रविः युष्मान् रक्षतु ।

The three worlds relapse to the earlier stage of creation every night due to the departure of the Sun. They plunge into deep sleep and become unknowable, inscrutable, and inconceivable as if covered with mire of the nether region. May that Sun whose appearance coincides with the onset of the process of creation protect you. 96

जिसके वियोगसे यह सारे तीन भुवन रात रातमें उसी तरह हो जाते हैं, जैसे सृष्टिके पहले पाताल पङ्कमें डुबे हुएकी तरह घन अन्धकारमें गभीर निद्रामग्न अचिन्तनीय अविज्ञेय और भेदक चिह्नोंसे रहित हुआ था । सृष्टिके तुल्य उदयवाले यह सूर्य आप लोगोंकी रक्षा करें ।।९६।।

**द्वीपे योऽस्ताचलोऽस्मिन् भवति खलु स एवापरत्रोदयाद्रि-**
**र्या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र तीव्रातपः सा**
**यद्वश्यौ देशकालाविति नियमयतो नो तु यं देशकाला-**
**वव्यात्स स्वप्रभुत्वाहितभुवनहितो हेतुरह्ना मिनो वः ।।९७।।**

**अन्वयः**—अस्मिन् द्वीपे यः अस्ताचलः भवति, स एव अपरत्र उदयाद्रिः खलु, इह उज्ज्वलेन्दुद्युतिः या यामिनी अन्यत्र सा तीव्रातपः दिवसः। यद्वश्यौ देशकालौ, यं तु देशकालौ नो नियमयतः, इति स्वप्रभुत्वाहितभुवनहितः अह्नां हेतुः सः इनः वः अव्यात् ।

**व्याख्या**—अस्मिन् द्वीपे यः अस्ताचलः अस्ताद्रिः स एव अपरत्र अन्यस्मिन् द्वीपे उदयाद्रिः खलु । इह अस्मिन् द्वीपे या उज्ज्वलेन्दुद्युतिः उज्ज्वला इन्दुद्युतिः चन्द्रकान्तिः यस्यां सा तथाभूता यामिनी रात्रिः, अन्यत्र सा तीव्रातपः तीव्रः आतपः यस्मिन् तथाभूतः दिवसः । देशश्च कालश्च देशकालौ यद्वश्यौ यदधीनौ, यं सूर्यं तु देशकालौ नो नियमयतः न नियन्त्रयतः । इति इत्थं स्वप्रभुत्वाहितभुवनहितः, स्वस्य प्रभुत्वेन आहितं सम्पादितं भुवनानां जगतां हितं येन सः, अह्नां दिवसानां हेतुः सः इनः सूर्यः वः युष्मान् अव्यात् रक्षतु । वृत्त्यनुप्रासोऽलङ्कारः ।

**भावार्थः**—अस्मिन् द्वीपे यः अस्ताचलः स एव अन्यस्मिन् (देशे) द्वीपे उदयाद्रिः भवति । इह या चन्द्रशोभिनी यामिनी देशान्तरे सा प्रचण्डरश्मिः दिवसः भवति । सूर्यः देशं कालं च नियमयति, तं तु देशकालौ न नियन्त्रयतः । इत्थं प्रभावशाली जगद्धितकरः सूर्यः युष्मान् रक्षतु ।

The Astācala of this region is the Udayādri of other. The moon-lit night here, is a hot day there. Time and clime do not restrain the Sun, rather they are restrained by him. May that Sun who is the master of the day, and who utilises his power for the benefit of the world, protect you. 97

इस द्वीपमें जो अस्ताचल है दूसरे द्वीपमें वह उदयाद्रि है । यहाँ जो चन्द्रमासे शोभित रात्रि है देशान्तरमें वह प्रचण्ड रश्मिवाला दिवस है, जो देश और कालको नियमित करता है, पर देश और काल जिसको नियमित नहीं करते हैं, इस प्रकार अपनी प्रभुताके साथ जो जगतका हित साधन करता है, दिवसका हेतु वह सूर्य आप लोगोंकी रक्षा करे ॥९७॥

**व्यग्रैरग्र्यग्रहेन्दुग्रसनगुरुभरैर्नोसमग्रैरुदग्रैः**
**प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन् गाम् ।**
**उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भामिवाह्ना-**
**मग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ।।९८।।**

**अन्वयः**—अह्नाम् अग्रे उदयगिरिगत; यः अग्र्यग्रहेन्दुग्रसनगुरुभरैः इव व्यग्रैः, नो समग्रैः उदग्रैः प्रत्यग्रैः ईषदुग्रैः गोगणैः उद्गाढार्चिर्विलीनामरनगरनगग्रावगर्भां गां गौरयन् श्रेयः विधत्ते सः ग्रहग्रामणीः वः गहनं ग्लपयतु ।

**व्याख्या**—अह्नां दिवसानाम् अग्रे प्रभाते उदयगिरिगतः उदयाचलमाश्रितः यः सूर्यः अग्र्यग्रहाश्च इन्दुश्च तेषां ग्रसनम् ग्रासः तेन गुरुः भरः भारः येषां तैः इव व्यग्रैः, नो समग्रैः असम्पूर्णैः उदग्रैः उन्नतैः प्रत्यग्रैः नूतनैः ईषदुग्रैः अल्पोष्णैः (बालत्वात्) गोगणैः किरणसमूहैः, उद्गाढार्चिर्विलीनाम्, उद्गाढाभिः अर्चिर्भिः किरणै, विलीनां व्याप्ताम्, अमरनगरनगग्रावगर्भाम्, अमराश्च नगराणि च नगाश्च ग्रावाणश्च गर्भे यस्याः तां देवनगरवनपर्वतपाषाणपूर्णां गां पृथिवीं गौरयन् धवलयन् श्रेयः मङ्गलं विधत्ते सम्पादयति, सः ग्रहग्रामणीः ग्रहमुख्यः रविः वः युष्माकं गहनं दुःखं ग्लपयतु शमयतु । गहनं गहने दुःखे विपिने कलिलेऽपि च इति विश्वः । वृत्त्यनुप्रासोऽलङ्कारः ।

**भावार्थः**—दिवसारम्भे सूर्यः स्वतेजसा ग्रहान् चन्द्रं च ग्रसन्, गुरु भरादिव व्यग्रैः, अपूर्णैः, अल्पो-द्रतैः, नूतनैः, अनुष्णैः, किरणैः देवतानगराद्रिपाषाणादिभिः पूर्णां पृथिवीम् आलोकयन् जगतां मङ्गलं कुरुते । ग्रहमुख्यः सः सूर्यः युष्माकं दुःखं शमयतु ।

**टिप्पणी**—'ग' इत्यस्य चतुर्विंशतिवारप्रयोगः कवेः अनुप्रासमोहं प्रकटयति ।

The Sun appears on Udayagiri in the early morning. He sends his fierce rays upwards, overpowers the leading planets

and moon; and emits his newly emerging rays to white-wash the earth full of divinities, cities, mountains and stones. May that Sun the Chief of the planets, destroy your sins. 98

सब दिवसोंके प्रारम्भमें उदयगिरि पर जो प्रमुख ग्रह और चन्द्रको ग्रास करनेसे मानो भारी होकर चञ्चल, असमग्र, उन्नत, ईषदुग्र तथा नूतन किरणोंके प्रवाहसे देवता, नगर, पर्वत, प्रस्तरादियोंको गर्भमें धारण करनेवाली पृथिवीको धवलित कर मङ्गल विधान करता है, ग्रहराज वह सूर्य आप लोगोंके दुःख शान्त करें ॥९८॥

**योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शङ्करोऽसौ**
**मृत्युः कालोऽलकायाः पतिरपि धनदः पावको जातवेदाः ।**
**इत्थं संज्ञा डवित्थादिवदमृतभुजां या यदृच्छाप्रवृत्ता-**
**स्तासामेकोऽभिधेयस्तदनुगुणगुणैर्यः स सूर्योऽवताद्वः ॥९९॥**

**अन्वयः**—साम्नां योनिः विधाता, मधुरिपुः अजितः, धूर्जटिः असौ शङ्करः, मृत्युः कालः, अलकायाः पतिः अपि धनदः, जातवेदाः पावकः, इत्थं डित्थडवित्थादिवत् अमृतभुजां याः संज्ञाः यदृच्छाप्रवृत्ताः, तासां तदनुगुणगुणैः यः एकः अभिधेयः सः सूर्यः वः अवतात् ।

**व्याख्या**—साम्नां सामवेदमन्त्राणां योनिः प्रभवः विधाता इति, मधुरिपुः मध्वरिः विष्णुः अजितः इति, धूर्जटिः धूः भारभूता जटिः जटा यस्य सः शिवः असौ शङ्करः इति, मृत्युः यमः कालः इति, अलकायाः पतिः कुवेरः अपि धनदः इति, जातवेदाः अग्निः पावकः इति डित्थडवित्थादिवत् अमृतभुजां देवानां याः संज्ञाः इत्थं यदृच्छाप्रवृत्ताः, तासाम् अनुगुणाः अनुकूलाः ये गुणाः तैः यः एकः सूर्यः अभिधेयः आख्यातुं योग्यः, विधात्रजितशङ्करकालधनदपावकादिशब्दैः यः सूर्यः एक एव अभिधातुं योग्यः स सूर्यः वः युष्मान् अवतात् रक्षतु ।

**भावार्थः**—सामवेदीयमन्त्राणाम् उत्पत्तिहेतुः ब्रह्मा विधाता इति, मधुरिपुः अजित इति, धूर्जटिः शङ्कर इति, मृत्युः काल इति, अलकायाः पतिः धनदः इति, जातवेदाश्च पावक इति अभिधीयन्ते । एतानि नामानि तत्तद्देवेषु डित्थडवित्थादिवत् यदृच्छया प्रवृत्तानि । एतानि नामानि तत्त्वतः अर्थदृष्ट्या सूर्य एव प्रयोक्तव्यानि । तत्तन्नामभिः अभिधेयः सकलगुणाधारः सूर्यः युष्मान् रक्षतु ।

Propagator of Sāmaveda is called Vidhātā, madhuripu is Ajita, Dhurjaṭī is Śaṅkara, Mṛtyu is Kāla, the master of Alakā is Dhanada and the Jātavedas is named as Pāvaka. These names (vidhātā etc.) of gods are wantonly given like dittha, davittha.

The meanings denoted by these terms are truly applicable to the Sun who alone possesses all their qualities, May that Sun protect you.99

सामवेदके उत्पत्तिकारीको विधाता, मधुरिपुको अजित, जटाजूटको धारण करने वालेको शङ्कर, मृत्युको काल, अलकापतिको धनद, जातवेदा (अग्नि)को पावक नामसे कहा जाता है । पर देवताओंके ये सब नाम डित्थ, डवित्थ (निरर्थक) शब्दतुल्य आकस्मिक भावसे दिया गया है । तत्त्वतः अर्थके अनुसार ये सब नाम सूर्यके ही होना ठीक है । इन सब नामसे वाच्य सूर्य आप लोगोंकी रक्षा करें ।।९९।।

**देवः किं बान्धवः स्यात् प्रियसुहृदथवाचार्य आहोस्विदर्यो**
**रक्षाचक्षुर्नु दीपो गुरुरुत जनको जीवितं वीजमोजः ।**
**एवं निर्णीयते यः क इव न जगतां सर्वथा सर्वदासौ**
**सर्वाकारोपकारी दिशतु दशशताभीषुरभ्यर्थितं वः ।।१००।।**

**अन्वयः**—असौ देवः जगतां बान्धवः किम् ? पियसुहृत् अथवा आचार्यः, आहोस्वित् अर्यः, रक्षाचक्षुः दीपः नु ? गुरुः उत जनकः, जीवितं, वीजम्, ओजः स्यात् नु ? एवं सर्वथा सर्वदा कः इव यः न निर्णीयते सर्वाकारोपकारी असौ दशशताभीषुः वः अभ्यर्थितं दिशतु ।

**व्याख्या**—असौ देवः जगतां बान्धवः किम्, पियसुहृत् प्रियमित्रम् अथवा आचार्यः आहोस्वित् अर्यः स्वामी, रक्षाचक्षुः दीपः नु ? नु इति प्रश्ने । गुरुः उत अथवा जनकः तातः, जीवितं, जीवनं, वीजं हेतुभूतम् ओजः बलं स्यात् नु ? एवं सर्वदा सर्वथा कथमपि यः न निर्णीयते न स्थिरीक्रियते, सर्वाकारेण सर्वस्वरूपेण उपकारी सः दशशताभीषुः सहस्रांशुः वः अभ्यर्थितं कामनां दिशतु पूरयतु । उत्प्रेक्षालङ्कारः ।

**भावार्थः**—सहस्रांशुः असौ देवः जगतां बान्धवः किम् ? प्रियमित्रं किम्, अथवा आचार्यः, स्वामी वा ? रक्षायै नेत्रयोः ज्ञापकः दीपः किम् ? गुरुः अथवा जनकः किम् ? सर्वेषां हेतुभूतं जीवनं किम् ? अथवा शक्तिभूतं बलं किम् ? एवं यः सर्वथा निर्णेतुं न शक्यते, परन्तु सर्वस्वरूपेण सर्वेषा मुपकारकः सः सहस्रांशुः युष्माकमभिलाषं पूरयतु ।

Is this divine being a relative of the world, or a bosom friend, or the preceptor, or the venerable one, or the eye that offers protection, or a lamp or the teacher, or the father, or is the life-force, or strength ? Thus, the Sun who is not clearly ascertained as to what he actually is, but benefits in all these roles, may fulfil all your desires.100

वह देव जगतोंके बान्धव है क्या ? प्रिय मित्र अथवा आचार्य है क्या ? अथवा प्रभु या रक्षा नेत्र दीप है क्या ? गुरु या जनक, या जीवन, या आदिकारण, या बल है क्या ? इस तरह जिसे हम किसी एकरूपसे निर्णय नहीं कर सकते, वह सर्व रूपसे उपकारी सहस्रांशु सूर्य आप लोगोंकी अभिलाषा पूर्ण करें ॥१००॥

**श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या**
**युक्तश्चैतान् पठेद्यः सकृदपि पुरुषः सर्वपापैर्विमुक्तः ।**
**आरोग्यं सत्कवित्वं मतिमतुलबलं कान्तिमायुः प्रकर्षं**
**विद्यामैश्वर्यमर्थं सुतमपि लभते सोऽत्र सूर्यप्रसादात् ॥१०१॥**

श्रीमयूरेण भक्त्या लोकस्य भूत्यै इति शतं श्लोकाः रचिताः । एतान् यः युक्तः सकृदपि पठेत् सः पुरुषः सर्वपापैः विमुक्तः आरोग्यं, सत्कवित्वं, मतिम्, अतुलबलं, कान्तिम्, आयुःप्रकर्षं, विद्याम्, ऐश्वर्यम्, अर्थं, सुतमपि अत्र सूर्यप्रसादात् लभते ।

These hundred ślokas have been composed by Śri Mayūra out of devotion for the benefit of the people. One who reads them with sincerity even once becomes free from all sins and gets health excellent poetic talent, wisdom incomparable strength, lustre, longlife, learning, prosperity, riches, and off-springs by the grace of Sun God in this world. 101

श्री मयूर भक्तिसे लोगोंकी रक्षाकेलिए एक सौ श्लोक रचना किये गये हैं । इनको भक्तिके साथ एक बार जो पढ़ता है, वह सर्व पापसे मुक्त होकर सूर्यकी दयासे नीरोग, सुकवि, बुद्धिमान्, बलवान्, कान्तिमान्, दीर्घायु, विद्वान्, धनशाली, ऐश्वर्यसम्पन्न और पुत्रवान् होता है ॥१०१॥

समाप्तम्

# श्लोकानुक्रमणिका


| श्लोकांशः | पृष्ठांकः |
|---|---|
| अक्षे रक्षां निबध्य प्रतिसरवलयै | 67 |
| अश्यामः काल एको न भवति | 19 |
| अस्तव्यस्तत्वशून्वो निजरुचिर | 17 |
| अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि | 41 |
| आक्रान्त्या वाह्यमानं पशुमिव | 50 |
| आयान्ती किं सुमेरोः सरणि | 26 |
| आवानैश्चन्द्रकान्तैश्च्युतिमिर | 36 |
| आवृत्तिभ्रान्तविश्वाः श्रममिव | 13 |
| ऊज्जृम्भाम्भोरुहाणां प्रभवति | 38 |
| उत्कीर्णस्वर्णरेणुद्रुतखुरदलिता | 68 |
| उद्गाढेनारुणिम्ना विदधति | 8 |
| उद्यद्द्यूद्यानवाप्यां बहुलतम | 78 |
| एकं ज्योतिर्दृशो द्वे त्रिजगति | 12 |
| एकाहेनैव दीर्घां त्रिभुवनपदवीं | 65 |
| एतत्पातालपङ्कप्लुतमिव तमसै | 96 |
| एतद्यन्मण्डलं खे तपति दिन | 88 |
| कस्त्राता तारकाणां पतति तनु | 76 |
| कैलासे कृत्तिवासा विहरति | 87 |
| क्रामेंल्लोलोऽपि लोकाँस्तदुपकृति | 85 |
| क्ष्मां क्षेपीयः क्षपाम्भः शिशिर | 21 |
| गन्धर्वैर्गद्यपद्यव्यतिकरितवचो | 35 |
| गर्वेष्वम्भोरुहाणां शिखरिषु | 3 |
| चक्री चक्रारपङ्क्तिं हरिरपि च | 71 |
| चक्षुर्दक्षद्विषो यत्र तु दहति | 79 |
| जम्भारातीभकुम्भोद्भवमिव | 1 |
| ज्यायो यद्वीजमह्ना | 73 |
| ज्योत्स्नांशाकर्षपाण्डुद्युतितिमिर | 25 |
| तन्वाना दिग्वधूनां समधिक | 14 |
| तीर्थानि व्यर्थकानि ह्रदनदसरसी | 95 |
| तीव्रं निर्वाणहेतुर्यदपि च विपुलं | 28 |
| दत्तानन्दाः प्रजानां समुचित | 9 |
| दत्तार्धैर्दूरनम्रैर्वियति विनयतो | 51 |
| देवः किं बान्धवः स्यात्प्रियसुहृद | 100 |
| द्वीपे योऽस्ताचलोऽस्मिन्भवति | 97 |
| धारा रायो धनायापरि सपदि | 11 |
| धुन्वन्तो नीरदालीर्निजरुचिह | 48 |
| धूर्ध्वस्ताग्र्यग्रहाणि धवजपटपवना | 66 |
| ध्वान्तध्वंसं विधत्ते न तपति | 27 |
| ध्वान्तस्यैवान्तहेतुर्न भवति | 84 |
| ध्वान्तौधध्वंसदीक्षाविधिपटु | 63 |
| नन्तुं नाकालयानामनिशमनुयतां | 69 |
| नाकौकः प्रयत्नीकक्षपतिपटुमहसां | 89 |
| निःशेषं नैशम्भः प्रसभमपनुद | 31 |
| निःशेषाशावपूरप्रवणगुरुगुण | 23 |
| निःस्यन्दानां विमानावलिवितत | 70 |
| नीत्वाश्वान्सप्त कक्षा इव नियम | 57 |
| नेत्राहीनेन मूले विहितपरिकरः | 72 |
| नो कल्पापायवायोरदयरय | 22 |
| नोदन्वाञ्जन्मभूमिर्न तदुदरभवो | 42 |
| नो मूर्च्छाछिन्नवाञ्छः श्रमविवश | 60 |
| नो शुष्कं नाकनद्या विकसित | 83 |
| न्यक्कुर्वन्नोषधीशे मुषितरचि | 5 |

| श्लोकांशः | पृष्ठांकः |
| --- | --- |
| पर्याप्तं तप्तचामीकरकटकतटे | 55 |
| पाशानाशान्तपालादरुणवरुणतो | 59 |
| पीनोरः प्रेरिताश्वैश्चरमखुरपुटाग्र | 62 |
| पौरस्त्यस्तोयदर्तोः पवन इव | 55 |
| प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः | 75 |
| प्रभ्रश्यत्युत्तरीयत्विषि तमसि | 4 |
| प्राक्कालोन्निद्रपद्माकरपरिमलना | 92 |
| प्राचि प्रागाचरन्त्योऽनतिचिर | 12 |
| प्रातःशैलाग्ररङ्गे रजनिजवनिका | 49 |
| प्लुष्टाः पृष्ठेऽशुपातैरतिनिकटतया | 44 |
| बन्धध्वंसैकहेतुं शिरसि नति | 10 |
| विभ्राणः शक्तिमाशु प्रशमितबल | 24 |
| बिभ्राणा वामनत्वं प्रथममथ | 7 |
| भक्तिप्रह्वाय दातुं मुकुलपुटकुटी | 2 |
| भासामासन्नभावादधिकतरपटो | 82 |
| भिन्नं भासारुणस्य क्वचिदभिनवया | 34 |
| भूत्वा जम्भस्य भेत्तुः ककुभि | 32 |
| भूमि धाम्नोऽभिवृष्ट्या जगति | 90 |
| मत्वान्यान्पार्श्वतोऽश्वान्स्फटिक | 45 |
| मा गान्म्लानिं मृणालीमृदुरिति | 18 |
| मार्गोपान्ते सुमेरोनुवति कृतनतौ | 47 |
| मीलच्चक्षुर्विजिह्मश्रुति जडरसनं | 30 |
| मुञ्चन्नश्मीन्दिनादौ दिनगमसमये | 52 |
| मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयो | 40 |
| मौलीन्दोर्मैष मोषीद्द्युतिमिति | 15 |
| यः स्रष्टापां पुरस्तादचलनवरम | 93 |
| यत्कान्तिं पङ्कजानां न हरति | 20 |
| यत्प्राच्यां प्राक्चकाप्ति प्रभवति | 77 |
| योक्त्रीभूतान्यूमस्य ग्रसितुमिव | 64 |
| योनिः साम्नां विधाता मधुरिषु | 99 |
| रक्षन्त्वक्षुण्ण हेमोपलपटलमलं | 43 |
| रत्नानां मण्डनाय प्रभवति नियतो | 29 |
| लोर्टल्लोष्टाविचेष्टः श्रितशयन | 84 |
| वह्निज्ञातं विकासीक्षणकमलवनं | 58 |
| वाचां वाचस्पतेरप्यचलभिदुचिता | 39 |
| विस्तीर्ण व्योम दीर्घाः सपदि | 16 |
| वेलावर्धिष्णु सिन्धोः पय इव | 74 |
| व्यग्रैरग्र्यग्रहेन्दुग्रसनगुरुभरैर्नो | 98 |
| व्यापन्नर्तुर्न कालो व्यभिचरति | 86 |
| शातः श्यामालताया परशुरिव | 53 |
| शीर्णघ्राणाङ्घ्रिपाणीत्व्रणिभि | 6 |
| शुष्यन्त्यूढानुकारा मकरवसतयो | 78 |
| श्लोका लोकस्य भुत्यै शतमिति | 101 |
| संसक्तं सिक्तमूलादभिनव भुवनो | 33 |
| साद्रिद्यूर्वीनदीशा दिशति दश | 94 |
| सानौ सा नौदये नारूणितदलपुन | 37 |
| सिद्धैः सिद्धान्तमिश्रं श्रितविधि | 81 |
| सोदन्तोऽन्तर्निमज्जज्जडखुरमुसलाः | 61 |
| हेलालोलं वहन्ती विषधरदमन | 46 |


***

**कादम्बरी।** सविमर्श 'भावबोधिनी' संस्कृत-हिन्दी व्याख्योपेता। व्या.- डॉ. जयशङ्कर लाल त्रिपाठी। सम्पूर्ण

**काव्यप्रकाशः।** मम्मटभट्टविरचितः। सविमर्श 'रहस्यबोधिनी' हिन्दी व्याख्या सहित। व्याख्याकार- डॉ. गजानन शास्त्री मुसलगाँवकर। सम्पादक- आचार्य पण्डित सत्यनारायण शास्त्री खण्डूड़ी। सम्पूर्ण

**काव्यालङ्कारः।** आद्याचार्य भामहविरचितः। आनन्दाऽऽख्य हिन्दी भाष्य संवलितः। भाष्यकारः साहित्यवारिधि डॉ. रामानन्द शर्मा

**कुट्टनीमतम् वा शम्भलीमतम्।** दामोदरगुप्त विरचितम्। 'रसदीपिका' व्याख्या सहितम्। व्याख्याकार- तनसुखराम शर्मा त्रिपाठी। अंग्रेजी भूमिका सहित

**कृष्णकर्णामृतम्।** लीलाशुकबिल्वमंगलविरचित। अन्वय, शब्दार्थ, अनुवाद एवं व्याख्या सहित। संपा. एवं व्याख्याकार- कल्याणलाल शर्मा (श्रीकृष्णकर्णप्रिय सुललित पदावली जिसे चैतन्यमहाप्रभु दक्षिण भारत के एक मन्दिर से अपने साथ लाये और अपने अनुयायियों में प्रचारित किया)

**गीतगोविन्दकाव्यम्।** श्रीजयदेवविरचितम्। 'इन्दु' हिन्दी टीका सहित।

**हिन्दी-दशरूपकम्।** धनञ्जयकृतम्। धनिककृतम् 'दशरूपकावलोक' टीका सहित। उत्तरप्रदेश सरकार द्वारा पुरस्कृत। व्याख्या.- डॉ. सुधाकर मालवीय

**नैषधीयचरितम्।** मल्लिनाथकृत 'जीवातु' संस्कृत टीका सहित सान्वय सटिप्पण 'चन्द्रिका' हिन्दी व्याख्योपेतम्। सम्पा. व्याख्याकार- डॉ. देवर्षि सनाढ्य।

**प्रतापरुद्रीयम्।** कुमारस्वामि-सोमपीथि कृत 'रत्नार्पण' संस्कृत टीका सहित 'बालक्रीडा' हिन्दी व्याख्योपेतम्। व्याख्याकार - मधुसूदन शास्त्री



Cover Designed by Pratyush